# लोकोक्ति रत्नम

पं० गौरीशङ्कर शास्त्री

मूल्य ॥)

ॐ

# ❋ लोकोक्ति रत्नप्रभा

रचयिता

झङ्ग निवासी पं० गौरीशङ्कर जी शास्त्री ।

प्रकाशक

मेहरचन्द्र, लक्ष्मणदास,

अध्यक्ष

संस्कृत पुस्तकालय, सैदमिट्ठा बाज़ार, लाहौर ।

प्रथमावृत्ति ] [ १९३१

श्रीमतुण्डाय नमः

# विज्ञप्तिः ।

अयि सुधिगणगणनाग्रगणनीयाः माननीयाः निस्सारसंसारसागरे आत्मसाक्षात्कारव्यवहारस्तसमस्तमायामूलकज्ञानाभावग्रहग्रस्तमानसानां न सुष्ठु किल समुल्लसतितरामन्दानन्दकन्दरूपः सर्वथा तथ्यस्पथ्यश्च वचः ।

अतः करुणावरुणालयश्रीमच्छङ्करचरणशरणपोतद्वारा भवार्णवसन्तरणकरणतया दुःखविघाताय सुखसुलाभाय च श्रवणमनननिदिध्यासनानि साधनानि यथाविधि यथाकालञ्च खलूररीकरणीयानीत्यत्र नास्ति वादविवादचर्चासम्भावना । तथापि सुकुमारमतीनां चिन्ताक्रान्तस्वान्तमनुजानां च तुष्टिपुष्टिहेतवे ब्रह्मास्वादसहोदरं परं प्रमोदकारि मनोहारि "रामादिवत् प्रवर्तितव्यं न रावणादिवत्" इति सुत्रभूतां प्रभूतां सुशिक्षां शिक्षयद्, वरीवृत्यते सुकविकावित्वमिति हि जागर्तितरारां साहित्यडिण्डिमोऽपि यत्र तत्र ।

तत्रापि च—साहित्यमहानिधिमध्यवार्तिनी सूक्तिरत्नावली हृदये विन्यस्ताऽभ्यस्ता च प्रस्तावरचनायां समस्यायां कथायां सभायां शिक्षाया आदाने दाने व्याख्याने वार्तालापादिप्रसङ्गे च स्वभासा बुद्धिविभवं भासयति किल, प्रसादयति च दुःख-दुःखितान् नरान्--इत्यत्र सदयसहृदयहृदयमेव प्रमाणतया सुतरां भातितराम् । अत एव च मया—तादृशसूक्तिगर्भित विविधलोकोक्तिरत्नानामेकत्र सङ्ग्रहो मतिमतां तत्रभवतां सतां मुदे भविष्यति—इत्येतद्विषये स्वकुलकमलादिवाकरनर-

वरतरगोस्वामिश्रीपण्डितरामरङ्गशास्त्रिमहोदयानां ( C. M. High School Lahore, संस्कृतप्रधानाध्यापकानाम् ) ...राज्ञं मुक्तावलीमिव हृदये विन्यस्य नानानवद्यगद्यपद्य-...रत्नाकरतो लोकोक्तिरत्नानि समुद्धृत्य यथामति च ...टिप्पणीसंवलिता ललिता सङ्कलिता चेयं लोको-...

... सीसकाक्षरयोजकदोषतः, शोधकदृष्टि प्रमादा-...र्हि—

...च्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ।

इति विमृशद्भिःसद्भिः क्षन्तव्यमिति सविनयं निवेदयति—

श्रीमत्पण्डितपण्डितशिवदयालुशर्मतनूजो
गौरीशङ्करशास्त्री,
झङ्गनिवासी ।

इति शम् ।

ओ३म्

# लोकोक्ति-रत्नप्रभा ।

## प्रथमः समुल्लासः ।

विश्वेशं सशिवं शिवं शिवकरं नत्वा च मत्वा गुरुं,
नानागद्यसुपद्यशास्त्रनिधितो लोकोक्तिरत्नानि वै ।
उद्धृत्याऽगुरुटिप्पणीपरियुता लोकोक्तिरत्नप्रभा ॥
गौरीशङ्करशास्त्रिणा मतिमतां मोदाय सङ्कल्प्यते ॥ १ ॥

१. अहम्ब्रह्माऽस्मि* ।
२. अयमात्मा ब्रह्म ।
३. अङ्गिनि गृहीतेऽङ्गानि गृहीतान्येव भवन्ति ।

---

१ ध्यात्वा—इत्यर्थः, धातूनामनेकार्थत्वात् ( अनेकार्था हि धातवः,) ।

२. तत्त्वमसि—अहम्ब्रह्मास्मि—अयमात्मा ब्रह्म—प्रज्ञानं ब्रह्म—इति प्रभृति-वाक्येषु लोकोक्तिसङ्गमनमप्रसङ्गतः कथं सङ्गच्छते "लोकोक्ति—रत्नप्रभा" इति नामधेयमिति चेदत्र ब्रूमः,—प्राधान्येन व्यपदेशा भवन्ति—भूयस्त्वात्तद्वादः-इत्यादि लोकन्यायप्रामाण्यान्न कापि दोषघोषसंभावनेति विदाकुर्वन्तु सज्जना जना इति । यद्वा "लोकोक्ति" इत्यत्र चतुर्थीषष्ठीसप्तमीतत्पुरु-षसमाससमाश्रयणात्समञ्जसमेतत्सर्वथा नामधेयम् ।

३. इदं पद्यं रूपकानुप्रासालङ्कृतिसमलङ्कृतम् ।

* अस्मिन् पुस्तके प्रथमवर्णक्रम एव निर्दिष्टः ।

४. अङ्गीकृतं सुकृतिनः परिपालयन्ति ।

५. अन्तर्दुष्टः क्षमायुक्तः सर्वानर्थकरः किल ।

६. अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ।

७. अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः ।

८. अंगुष्ठोदकमात्रेण शफरी † फुर्फुरायते ‡ ।

९. अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ।

१०. अगाधजलसञ्चारी न गर्वं याति रोहितः § ।

११. अयं निजः परो वेति गणना लघुचेतसाम् ।

१२. अहितो देहजो व्याधिर्हितमारण्यमौषधम् ।

१३. अमृतं शिशिरे वह्निः ।

१४. अमृतं प्रियदर्शनम् ।

१५. अमृतं राजसंमानम् ।

१६. अमृतं क्षीरभोजनम् ।

१७. अमृतं राहवे मृत्युः ।

१८. अमृतं हि गवां क्षीरम् ।

१९. अभद्रे जाते सर्वभद्रं जातम् ।

२०. अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति ।

२१. अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ।

२२. अवसरपठिता वाणी गुणगणरहिताऽपि शोभते पुंसाम् ।

२३. अत्यन्तपराजयाद् वरं संशयोऽपि ।

२४. अधोऽधः पश्यतः कस्य महिमा नोपचीयते ।

---

† प्रोष्ठी तु शफरी द्वयोरिति नामलिङ्गानुशासने, ( शफरी-मच्छी ) ।

‡ फर्फरायते—इत्यपि पाठान्तरम् ।

§ मत्स्यविशेषः ।

२५. अपृष्टोऽपि हितं ब्रूयाद् यस्य नेच्छेत्पराभवम्।
२६. अजीर्णभयान्न हारपरित्यागः।
२७. अजीर्णे* भोजनं विषम्।
२८. अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते।
२९. अतिस्नेहपरिष्वङ्गाद् वर्तिरार्द्रापि दह्यते।
३०. अतिभुक्तिरतीवोक्तिः सद्यः प्राणापहारिणी।
३१. अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके।
३२. अतिलोभाभिभूतस्य शिखा भवति मस्तके।
३३. अति सर्वत्र वर्जयेत्।
३४. अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति।
३५. अतिस्नेहः पापशङ्की।
३६. अतिस्नेहः किल कार्यदर्शी।
३७. अतिरोषणश्चक्षुष्मानप्यन्ध एव जनः।
३८. अतिद्रुतवाहिनी चानित्या नदी।
३९. अतिरमणीये वपुषि व्रणमेव मक्षिकानिकरः।
४०. अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्तते।
४१. अतृणे पतितो वह्निः स्वयमेवोपशाम्यति।
४२. अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्।
४३. अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि।
४४. अपि निर्वाणमायाति नाऽनलो याति शीतताम्।
४५. अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः।
४६. अभोगस्य हतं धनम्।
४७. अभ्यागतो यत्र न तत्र लक्ष्मीः।
४८. अर्थातुराणां न गुरुर्न बन्धुः।
४९. अर्धो घटो घोषमुपैति नूनम्।

---

* अजीर्णम्—पाठान्तरम्।

५०. अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः।

५१. असारे दग्धसंसारे सारं सारङ्गलोचनाः।

५२. असन्तुष्टा द्विजा नष्टाः।

५३. अक्के * ( अर्के ) चेन्मधु विन्देत् किमर्थं पर्वतं व्रजेत्।

५४. अहो निधनता सर्वापदामास्पदम्।

५५. अहो रूपमहो ध्वनिः †।

५६. अहो चित्राकारा नियतिरिव नीतिर्नयविदः।

५७. अहो दुर्जनसंसर्गान्मानहानिः पदे पदे।

५८. अहो दुरन्ता बलवद्विरोधिता।

५९. अहो दुरासदो राजमहिमा।

६०. अहो निरंकुशा जडधियः।

६१. अहो विरसता संसारस्थितेः।

६२. अहो दुरतिक्रमा कालगतिः।

६३. अर्धो वा एष आत्मनो यत्पत्नी।

६४. अद्य पुनः पिशाचविवाहे गर्दभगानं संवृत्तम्।

६५. अन्यद् भुक्तमन्यद् वान्तम्।

६६. अनश्वा यत्र हेषन्ते शिरः पर्वणि मुण्डितम्।

६७. अर्थी दोषं न पश्यति।

६८. अर्थी समर्थो विद्वानधिक्रियते।

६९. अध्रुवं नष्टमेव हि।

७०. अभ्यन्तरोऽहं लोके न त्वहं लोकः।

७१. अभ्यन्तरो ‡ हि समुदायस्याऽवयवः।

---

* गृहकोणे–इत्यर्थः।

† उष्ट्राणाञ्च विवाहोऽस्ति गर्दभा गीतगायकाः। परस्परं प्रशंसन्ति इति पूर्वपादत्रयम्।

‡ तथथा—"वृक्षः प्रचलन् सहावयवैः प्रचलति" इति महाभाष्यम्।

७२. अन्यादिमस्याश्रित्य रूपसामान्यात्तदेवेदमिति ।

७३. अहिरेव ह्यहेः पादान् विजानाति न संशयः ।

७४. अभिमानविहीनानां किं धनेन किमायुषा ।

७५. अभावे शालिचूर्णं वा शर्करा वा गुडस्तथा ।

७६. अणुरपि विशेषोऽध्यवसायकरः ।

७७. अधिकस्याधिकं फलम् ।

७८. असती भवति सलज्जा ।

७९. अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।

८०. अहं तपोदशङ्खोऽस्मि वदामि न ददामि वै ।

८१. अन्यस्माल्लब्धपदो नीचः प्रायेण दुस्सहो भवति ।

८२. अन्तस्तिमिरनाशाय शब्दबोधो निरर्थकः । †

८३. अकरणात्करणं ‡ श्रेयः ( श्रेष्ठम् ) ।

८४. अये कथमनभ्रा वृष्टिः ।

८५. अन्धेनैव नीयमाना यथाऽन्धाः ।

८६. अन्धस्येवान्धलग्नस्य विनिपातः पदे पदे ।

८७. अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ।

८८. अपामपि सहस्रेण धौतं चास्यं कथं भवेत् ।

८९. अवश्यम्भाविनो भावा भवन्ति महतामपि ।

९०. अप्रतिषिद्धमनुमतं भवति ।

९१. अन्ते या मतिः सा गतिः ।

९२. अन्ते लेखः सर्वोपकाराय भवति ।

९३. अन्ते रण्डाविवाहश्चेदादावेव कुतो न सः ।

९४. अभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ।

९५. अल्पेन सिद्धे महति कश्चिन्नैव प्रवर्तते ।

---

† "न नश्यति तमो नाम कृतया दीपवार्तया" इत्युत्तरार्धम् ।

‡ मन्दकरणमिति वा ।

९६. अवयवशक्तेः समुदायशक्तिर्बलीयसी ।

९७. अशक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने ।

९८. अस्त्रमस्त्रेण शाम्यति ।

९९. अर्थं विना नैव यशश्च मानम् ।

१००. अस्य पापोदरस्यार्थे किमनाटि न नाटकम् ।

१०१. अर्थो हि लोके पुरुषस्य बन्धुः ।

१०२. अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम् ।

१०३. अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ।

१०४. अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद् गिराम् ।

१०५. अवाप्तं कलिवनं प्रविष्टः क्रमेलकः* कण्टकजालमेव ।

१०६. अम्बुनो विन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ।

१०७. अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।

१०८. अवश्यमेव सामान्यं विशेषं प्रतिगच्छति ।

१०९. अपन्थानं तु गच्छन्तं सोदरोपि विमुञ्चति ।

११०. अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति

१११. अजा सिंहप्रसादेन वने चरति निर्भयम् ।

११२. अनन्यपरता चास्य कार्यसिद्धेस्तुलक्षणम् ।

११३. अनन्तं बत मे चित्तं यस्य मे नास्ति किञ्चन ।

११४. अयमपरो गण्डस्योपरि स्फोटः ।

११५. अग्निर्हिमस्य भेषजम् ।

११६. अनिर्वेदप्राप्याणि श्रेयांसि ।

११७. अलाभे मत्तकाशिन्या † दृष्टा तिर्यक्षु कामिता ।

११८. अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ।

---

* उष्ट्रः ।

† मत्तकाशिनी स्त्रीविशेषः ।

११९. अन्यार्थमपि कृतमन्यार्थमपि शक्नोति कर्तुम्* ।
१२०. अनुरागोऽनुरागेण परीक्षितव्यः ।
१२१. अनुभूयमाने किं संशयेत् ।
१२२. अविषोऽपि कदाचिद्दशो भवेत् ।
१२३. अनवस्थिता भूतसन्निवेशाः ।
१२४. अन्यः करोति व्यापारं लिप्तो भवति लेखकः ।
१२५. अन्यथा वस्तु प्रवृत्तमन्यथा वचनपर्यायः ।
१२६. अपेयेषु तडागेषु बहुतरमुदकं भवति ।
१२७. अदूषितं† परमतं स्वमतमेव ।
१२८. अनुल्लङ्घनीयः सदाचारः ।
१२९. अनिषिद्धमनुमतं भवति ।
१३०. अनिर्वेदः श्रियो‡ मूलम् ।
१३१. अनुकूलं हि दैवं सर्वस्मै स्वस्ति करोति ।
१३२. अयमपरो गण्डस्योपरि पिटकोद्भेदः ।
१३३. अयमपरः क्षते क्षारावसेकः ।
१३४. अविमृश्यकारिता हि पुंसः परं परिभवस्थानम् ।
१३५. अप्रतिकारे कर्मणि प्रहरणानि विडम्बनाय ।
१३६. अनर्थशङ्कीनि बन्धुहृदयानि भवन्ति ।
१३७. अनपराद्धं किल शैशवम् ।
१३८. अन्धानां कथमभिलष्यते पयसो नैर्मल्यम् ।
१३९. अभङ्गुरा खलु देवी नियतिः ।
१४०. अन्तःपुरगतमापणे घुष्यते ।
१४१. अर्थो हि कन्या परकीय एव ।

---

* तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयत उपस्पृश्यते च ।

† तदुक्तम्—परमंत्र स्वमते विनिवेशितं यदि न दूषितमादृतमेव तत् ।

‡ सिद्धेरित्यपि पाठः ।

१४२. अनाथपरिपालनं धर्मः।
१४३. अपुत्रस्य गतिर्नास्ति।
१४४. अपुत्रस्य गृहं शून्यम्।
१४५. अपरिणामोपशमो दारुणो लक्ष्मीमदः।
१४६. असिद्धं* बहिरङ्गमन्तरङ्गे।
१४७. असतां हृदि प्रविष्टो दोषलवः करालायते।
१४८. अल्पानामपि वस्तूनां संहतिः कार्यसाधिका।
१४९ अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्।
१५०. अधिकार्थालाभेऽल्पार्थे प्रवृत्तिर्न दोषाय।
१५१. अलिरेति वलात्कमलं न हि भेकस्त्वेकवासोऽपि।
१५२. अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु।
१५३. अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्।
१५४. अत्यारूढो हि नारीणामकालज्ञो मनोभवः।
१५५. अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः।
१५६. अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा।
१५७. अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते।
१५८. अविज्ञाते हि बन्धौ हि बलात्प्रह्लादते मनः।
१५९. अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा।
१६०. अनुहुंकुरुते घनध्वनिं न हि गोमायुरुतानि केसरी।
१६१. अश्माऽपि याति देवत्वं महद्भिः सुप्रतिष्ठितः।
१६२. अत्यादरः शङ्कनीयः।
१६३. अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च।
१६४. अनभ्यासे विषं शास्त्रम्।

---

* अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धमित्यर्थः।

१६५. अनभ्यस्ते विषं शास्त्रम् ।
१६६. अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् ।*
१६७. अनागतं यः कुरुते स शोभते ।
१६८. अन्नद्वेये वर्धति† जाठराग्निः ।
१६९. अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते‡ तुषारा ।
१७०. अलाभात् स्वल्पलाभोऽपि वरम् ।
१७१. अनधिगतपरिमलाऽपि हरति दृशं मालतीमाला ।
१७२. अनेकार्था हि धातवः ।
१७३. असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
१७४. अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।
१७५. अहिंसा परमो धर्मः ।
१७६. अनुक्रमप्यूहति पण्डितो जनः ।
१७७. अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
१७८. अर्धमात्रालाघवेनापि पुत्रोत्सवं मन्यन्ते वैयाकरणाः ।
१७९. अनधीते महाभाष्ये व्यर्था स्यात्पदमञ्जरी ।
१८०. आकरे पद्मरागाणां जन्म काचमणेः कुतः ।
१८१. आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ।
१८२. आलस्योपहता विद्या ।

---

* "आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्" इत्युत्तरभागः ।

† अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यञ्चक्षिङो ङित्करणाज्ज्ञापकात् । यद्वा चुरादिगणपठितवृधुधातुप्रयोगः । वर्धतीत्यस्यस्थाने दीव्यतीत्यपि पाठो दृश्यते ॥

‡ हि यस्मादपामद्भिस्तृप्ताय पुरुषाय स्वादुः सुरसा, सुगन्धिः कर्पूरादिना, तुषारा शीतला च, वारिधारोदकधारा न रोचते । सुहितार्थयोगे "पूरणगुण०" इति षष्ठीसमासनिषेधादेव—अपामिति षष्ठी, "तृप्त्यर्थानां करणे षष्ठी च" इति वा । "तृप्ताय" रुच्यर्थानामिति चतुर्थी । इति नैषधीयचरितटीकायाम् ।

१८३. आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः ।
१८४. आपत्सु वैराणि समुल्लसन्ति ।
१८५. आपदर्थं धनं रक्षेत् ।
१८६. आकण्ठजलमग्नोऽपि शुनको लेढि जिह्वया ।
१८७. आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।
१८८. आवेष्टितो महासर्पैश्चन्दनः किं विषायते ।
१८९. आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ।
१९०. आम्रान् पृष्टः कोविदारानाचष्टे ।
१९१. आम्राश्च सिक्ताः पितरश्च तृप्ताः । †
१९२. आशैव राक्षसी पुंसाम् ।
१९३. आशैव विषमञ्जरी ।
१९४. आशैव जीर्णमदिरा ।
१९५. आशाया ये दासास्ते दासाः सर्वलोकस्य ।
१९६. आशा येषां दासी तेषां दासायते लोकः ।
१९७. आत्मनः कर्मदोषांस्तु नैव जानात्यपण्डितः ।
१९८. आचारः प्रथमो धर्मः ।
१९९. आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
२००. आदानं हि विसर्गाय सतां वारिमुचामिव ।
२०१. आज्ञा गुरूणां ह्यविचारणीया ।
ष २०२. आषाढवाते चलति द्विपेन्द्रे चकवलो वारिधिरेव-
काष्ठा ।
२०३. आवेष्टितं महासर्पैश्चन्दनं न विषायते ।
२०४. आज्ञाभङ्गकरान् राजा न क्षमेत सुतानपि ।
२०५. आयुर्मर्माणि रक्षति ।
२०६. आमोदो न हि कस्तूर्याः शपथेन निवार्यते ।
२०७. आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ।

---

† "प्रीणिताः" [illegible] पाठो महाभाष्यप्रथमाह्निके ।

२०८. आर्जवं हि कुटिलेषु न नीतिः ।
२०९. आशा बलवती कष्टं नैराश्यं परमं सुखम् ।
२१०. आमूलसिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ।
२११.. आहारो हि मनुष्याणां जन्मना सह जायते ।
२१२. आप्तकामस्य का स्पृहा ।
२१३. आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः ।
२१४. आत्मनस्तु कामाय सर्वं प्रियं भवति ।
२१५. आत्मनः प्रतिकूलानि न परेषां समाचरेत् ।
२१६. आत्मवत्सर्वभूतेषु यः पश्यति स पण्डितः * ।
२१७. आत्मवर्गहितमिच्छति सर्वः ।
२१८. आत्मार्थे पृथिवीं त्यजेत् ।
२१९. आत्मा वै जायते पुत्रः ।
२२०. आत्मैव पुत्रनामासि ।
२२१. आत्मैव ह्यात्मनो बन्धुः ।
२२२. आत्मैव रिपुरात्मनः ।
२२३. इन्द्रो मायाभिः पुरुरूप ईयते ।
२२४. इच्छानुरूपो विभवः कदा कस्य भविष्यति ।
२२५. इय † मुदरदरी दुरन्तपूरा ।
२२६. इतो भ्रष्टस्ततो भ्रष्टः ।
२२७. इदञ्च नास्ति परञ्च लभ्यते ।
२२८. इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ।
२२९. इष्टं धर्मेण योजयेत् ।
२३०. इष्टमूलानि शोकानि ।
२३१. इध्मसनञ्चा वृष्टिः ।

---

* "पश्यति" इति पाठान्तरम् । "वीक्षन्ते धर्मबुद्धयः" इति पाठो वा ।

† इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्गभूमिः ।
क्षणमपि न सहे भवादृशानां कुटिलकटाक्षनिरीक्षणं नृपाणाम् ।

२३२. इच्छति शती सहस्रम् ।
२३३. इतोऽप्यन्धकूपः, इतो दन्दशूकः ।
२३४. इतरेतरानुरागो हि विवाहकर्मणि परार्घ्यं मङ्गलम् ।
२३५. इदञ्च जगति लाभमिच्छतो * मूलच्छेदः ।
२३६. इतिहासपुराणञ्च पञ्चमो वेद उच्यते ।
२३७. इदमेव हि पाण्डित्यं चातुर्यमिदमेव हि ।
इदमेव सुबुद्धित्वमायादल्पतरो व्ययः ।
२३८. इष्यमाणस्यैव प्राधान्यं न त्विच्छायाः ।
२३९. ईश्वरेच्छा गरीयसी ।
२४०. उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः ।
२४१. उत्तमा आत्मना ख्याताः † ।
२४२. उदारचरितानां तु वसुधैव कुटुम्बकम् ।
२४३. उदारस्य तृणं वित्तम् ।
२४४. उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ।
२४५. उदिते परमानन्दे नाहं न त्वं न वै जगत् ।
२४६. उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
२४७. उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ।
२४८. उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
२४९. उत्पतितोऽपि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ।
२५०. उत्सर्पिणी खलु जगतः प्रार्थना ।
२५१. उद्योगिनं सततमत्र समेति लक्ष्मीः ।
२५२. उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः ।
२५३. उद्योगः पुरुषलक्षणम् ।
२५४. उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् । ‡

* इदमिति धात्वर्थविशेषणतया क्लीवत्वम् ।

† पित्राख्याताश्च मध्यमाः । मातुलेनाधमाः ख्याताः श्वशुरेणाधमाधमाः ॥

‡ जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः । इत्युत्तरार्धम् ।

२५५. उष्ट्राणाञ्च विवाहोऽस्ति गर्दभा गीतगायकाः ।

२५६. उपानद्गूढपादस्य ननु चर्मावृतेव भूः ।

२५७. उदक्रान्तं स्निग्धोऽनुगन्तव्यः ।

२५८. उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ।

२५९. उत्तमेषु क्षणं कोपः † ।

२६०. उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।

२६१. उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ।

२६२. उपजीव्योपजीवकयोरुपजीव्यस्य प्राबल्यम् ।

२६३. उपवासाद् वरं भैक्ष्यम् ।

२६४. उपदेशानुपदेशत्वे विपरीतं बलाबलम् ।

२६५. उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ।

२६६. उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।

२६७, उपायान्तरमुपायान्तरादस्यादूषकम् ।

२६८. उत्साहवन्तो हि नरा न लोके सीदन्ति कर्मस्वतिदुष्करेषु ।

२६९. उभयगतिरिह भवति ।

२७०. उपोषितस्य ‡ व्याघ्रस्य पारणं पशुमारणम् ।

२७१. उपाधिर्भिद्यते न तूपाधिमान् ।

२७२. उपायं चिन्तयन् प्राज्ञरपाय* मपि चिन्तयेत् ।

२७३. उभयतः पाशा रज्जुः ।

२७४. उत्तिष्ठत जागृत प्राप्य वरान् निबोधत ।

२७५. उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावः ।

२७६. उपकर्ताऽधिकाराढ्यः स्वापराधं न मन्यते ।

---

† मध्यमे घटिकाद्वयम् । अधमे स्यादहोरात्रं चाण्डाले मरणान्तिकः ।

‡ कृतोपवासस्य बुभुक्षितस्येति भावार्थः ।

* विपदम् ।

२७७. उपकारं ध्वजीकृत्य सर्वमेव विलुम्पति ।
२७८. ऊर्णा वातेन शुध्यति ।
२७९. ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगः ।
२८०. ऋते समुद्रादन्यः को बिभर्ति वडवानलम् ।
२८१. ऋते ज्ञानान्न मुक्तिः ।
२८२. ऋद्धिश्चित्तविकारिणी ।
२८३. ऋणकर्ता पिता शत्रुः ।
२८४. एकं सन्धित्सतोऽपरं च्यवते ।
२८५. एकत्र निर्णीतशास्त्रार्थोऽन्यत्रापि तथा ।
२८६. एकसम्बन्धिदर्शनमपरसम्बन्धिस्मारकम् ।
२८७. एकदेशविकृतमनन्यवत् ।
२८८. एकवाक्यतापन्नानां सम्भूयैकार्थप्रतिपादकत्वम् ।
२८९. एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति ।
२९०. एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेत् ।
२९१. एका क्रिया द्व्यर्थकरी प्रसिद्धा ।
२९२. एकामासन्धिं परिहरतो द्वितीयाऽऽपद्यते ।
२९३. एकां लज्जां परित्यज्य सर्वत्र विजयी भवेत् ।
२९४. एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् ।
२९५. एको देवः केशवो वा शिवो वा ।
२९६. एकं मित्रं भूपतिर्वा यतिर्वा ॥
२९७. एका भार्या सुन्दरी वा दरी वा ।
२९८. एको वासः पत्तने वा वने वा ।
२९९. एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।
३००. एको गुणः खलु निहन्ति समस्तदोषान् ।
३०१. एको दोषो विदेशस्य स्वजनान्निर्यत् विरुध्यते ।

३०२. एकोऽपि गरीयान् दोषः समग्रमपि गुणग्रामं दूषयति।
३०३. एकश्चन्द्रस्तमो हन्ति न च तारासहस्रकम् ।
३०४. एष नामानुग्रहो यत्कुलादपतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।
३०५. एष यमसदनं प्रविश्य प्रतिनिवृत्तः ।
३०६. एष हुतवहं चर्षितुकामो मृगाङ्कमणिः ।
३०७. ऐकमत्ये द्वयोरेव किमसाध्यं भवेदिह ।
३०८. औषधं जाह्नवीतोयं वैद्यो नारायणो हरिः ।
३०९. औषधं स्वादु हितञ्च दुर्लभम् ।

इति प्रथमः समुल्लासः ।

---

# द्वितीयः समुल्लासः ।

३१०. कण्ठे सुधा वसति वै खलु सज्जनानाम् ।
३११. कर्मणो गहना गतिः ।
३१२. कर्म कः स्वकृतमत्र न भुङ्क्ते ।
३१३. कर्मानुगो गच्छति जीव एकः ।
३१४. कर्मायत्तं फलं पुंसाम् ।
३१५. कः परः प्रियवादिनाम् ।
३१६. कणशः क्षणशश्चैव विद्यामर्थं च चिन्तयेत् ।
३१७. कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ।
३१८. कवयः किं न पश्यन्ति ।
३१९. कवयः क्रान्तदर्शिनाः ।
३२०. कष्टः खलु पराश्रयः ।
३२१. कष्टात् कष्टतरं क्षुधा ।
३२२. कष्टादपि कष्टतरं परगृहवासः परान्नञ्च ।

३२३. कस्याचित्किमपि नो हरणीयम् ।

३२४. कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत् ।

२२५. कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा* ।

३२६. कथमत्र मक्षिका रणे कुञ्जरसञ्चारः ।

३२७. कन्यापितृत्वं खलु नाम कष्टम् ।

३२८. कर्तव्यानि खलु दुःखितैर्दुःखनिर्धारणानि ।

३२९. कन्यका हि निर्दोषदर्शना भवन्ति ।

३३०. करनिहितकन्दुकसमाः पातोत्पाता मनुष्याणाम् ।

३३१. कमलाकरे करास्तिग्मतेजसः ।

३३२. कलान्वयः श्लाघ्यतरो हि वृद्धेः ।

३३३. कथापि खलु पापानामलमश्रेयसे यतः ।

३३४. कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ।

३३५. कर्मभूयस्त्वात्फलभूयस्त्वम् ।

३३६. कस्माज्जीवसि हे सखे विषकृमिन्यायेन जीवाम्यहम् ।

३३७. काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।

३३८. काले खलु समारब्धाः फलं बध्नन्ति नीतयः ।

३३९. कालेन फलते तीर्थं सद्यः साधुसमागमः ।

३४०. कालस्य कुटिला गतिः ।

३४१. काली दाससङ्गेन दृश्यतां ह्रस्वतां गता ।

३४२. कालो हि दुरतिक्रमः ।

३४३. कालो गच्छति मूर्खाणां निद्रया कलहेन वा ।

३४४. कालानुरूपं प्रतिविधातव्यम् ।

३४५. कालापेक्षी दण्डनीतिप्रयोगः ।

३४६. काको हि जीवति चिराय बलिञ्च भुङ्क्ते ।

३४७. कालिमा कालकूटस्य नापैतीश्वरसङ्गमात् ।

---

* नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण—इत्युत्तरार्धम् ।

३४८. कान्ता रूपवती शत्रुः ।
३४९. का हानिः ? समये च्युतिः ।
३५०. कामातुराणां न भयं न लज्जा ।
३५१. कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ।
३५२. कायः कस्य न वल्लभः ।
३५३. काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ।
३५४. काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः ।
३५५. काचः काचो मणिर्मणिः ।
३५६. काकः काकः पिकः पिकः ।
३५७. काष्ठं काष्ठेन योजयेत् ।
३५८. काश्मीरजस्य कटुतापि नितान्तरम्या ।
३५९. कार्यकारणसम्बन्धाद् यूयं यूयं वयं वयम्* ।
३६०. कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
३६१. कार्यं वा साधयेयं देहं वा पातयेयम् ।
३६२. कार्यं कार्यान्तरमन्तरयति ।
३६३. कार्येण कारणमनुमीयते ।
३६४. कारणगुणाः कार्यगुणानारभन्ते ।
३६५. कारणस्य कारणमपि तत्कारणम् ।
३६६. कारणं विना कार्यानुपपत्तिः ।
३६७. कामिनामधरास्वादः सुरतादतिरिच्यते ।
३६८. किं तया क्रियते धेन्वा या वधूरिव केवला ।
३६९. किं विदग्धमनसामगोचरः ।
३७०. किं महोरगविसर्पिविक्रमो राजिलेषु† गरुडः प्रवर्तते ।

---

* युष्माकं बदरीचक्रमस्माकं बदरीगृहे—इत्युत्तरार्धम् ।

† समौ राजिलडुण्डुभौ—इत्यमरः । राजिलो निर्विषद्विमुखसर्पः ।
केंचुआ—ढोंडा सांप—गेंडुआ—मलप्प—इति भाषायाम् ।

३७१ किं दुस्सङ्गाद् भवति महतां मानपूजापहारः ।
३७२. किं किं न साधयति कल्पलतेव विद्या ।
३७३. किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ।
३७४. किं दूरं व्यवसायिनाम् ।
३७५. किं गते सलिले सेतुबन्धेन ।
३७६. किं मर्दितोऽपि कस्तूर्यां लशुनो याति सौरभम् ।
३७७. किं गते विवाहे नक्षत्रपरीक्षया ।
३७८. किङ्कराः खलु नरा देवतानाम् ।
३७९. किञ्चित् कालोपभोग्यानि यौवनानि धनानि च ।
३८०. किमेषोऽनभ्रो वर्षः* ।
३८१. किमीश्वराणां परोक्षं नाम ।
३८२. कियच्चिरं वा मेघान्तरेण न पूर्णचन्द्रदर्शनम् ।
३८३. किमिष्टमन्नं खलु सूकराणाम् ।
३८४. किमस्ति मस्तकमणिं फणिपतेरपहर्तुं समर्थो जनः ।
३८५. किमार्द्रकवणिजो वहित्रचिन्तया† ।
३८६. कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
३८७. कीदृशस्तृणानामग्निना सह विरोधः ।
३८८. कीर्तिर्यस्य स जीवति ।
३८९. कुशाग्रेणैव संस्पृष्टः प्राप्तकालो न जीवति ।
३९०, कुकृत्ये को न पण्डितः ।
३९१. कुठारैर्दण्डनिर्मुक्तैर्भिद्यन्ते तरवः कथम् ।
३९२. कुगेहिनीं प्राप्य गृहे कुतः सुखम् ।
३९३. कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
३९४. कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ।

* वर्षोऽस्त्रि भारतादौ जम्बूद्वीपाब्दवृष्टिषु । प्रावृट्काले स्त्रियां भूम्नि—इति मेदनीकोषे पुंस्त्वमपि वर्षशब्दस्य ॥

† पोत—( जहाज )

३९५. कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गमः ।
३९६. कुतः शङ्का कलङ्किनः ।
३९७. कुतः सत्यं च कामिनः ।
३९८. कुड्यं विना चित्रकर्मेव ।
३९९. कुपुत्रमासाद्य कुतो जलाञ्जलिः ।
४००. कुप्येत् को नाऽनियाचितः ।
४०१. कुपात्रे रमते नारी ।
४०२. कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम् ।
४०३. कृश कस्याऽस्ति सौहृदम् ।
४०४. कृपणस्य धनं याति वह्नितस्करपार्थिवैः ।
४०५. कृपणानुसारि च धनम् ।
४०६. कृशताभिमता देहे पीनता न तु शोफतः ।
४०७. कृताकृतप्रसङ्गी यो विधिः स नित्यः ।
४०८. कृतघ्ने नास्ति निष्कृतिः ।
४०९. कृतप्रयत्नोऽपि गृहे विनश्यति ।
४१०. कृतस्य करणं नास्ति ।
४११. कृते कार्ये किं मुहूर्तप्रश्नेन ।
४१२. केवलोऽपि सुभगो नवाम्बुदः किं पुनस्त्रिदशचापलाञ्छितः ।
४१३. केवलाघो भवति केवलादी ।
४१४. के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ।
४१५. केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः ।
४१६. केन कदाऽवलोकितो ज्योत्स्नारहितश्चन्द्रमाः ।
४१७. केन देवो मातरिश्वा बद्धपूर्वः ।
४१८. केन गण्यो गरीबः ।
४१९. कैरजीर्णभयाद् भ्रातर्भोजनं परिहीयते ।
४२०. कोऽतिभारः समर्थानाम् ।

४२१. को न याति वशं लोके मुखे पिण्डेन पूरितः।
४२२. को धीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतः।
४२३. को नाम पञ्चजनः* पञ्चाननस्य वदनादामिषमात्तु-मभिलषति।
४२४. को नामोष्णोदकेन नवमालिकां सिञ्चति।
४२५. को वा पिपासुः पानीयचषकं पापः पांसुपूरैः पूरयेत्।
४२६. को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पथि†।
४२७. को हि पूज्यस्य गुरोर्वचनं न बहु मन्यते।
४२८. को विदेशः सविद्यानाम्।
४२९. को हि जानाति सम्यग् दैवगतिम्।
४३०. कोलाहले काककुलस्य जाते विराजते कोकिलकूजितं किम्।
४३१. कोषः कोषवतः प्राणाः, प्राणाः प्राणा न भूपतेः।
४३२. को न हृष्यति वित्तेन।
४३३. क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे।
४३४. क्रियासिद्धिर्वस्तूपहिता प्रसीदति।
४३५. क्रिया हि विकल्प्यते न वस्तु।
४३६. क्रोधो मूलमनर्थानाम्।
४३७. क्लेशः फलेन हि पुनर्नवतां विधत्ते।
४३८. क्व भोगमाप्नोति न भोगभाग्‡ जनः।
४३९. क्वचित् काणो भवेत्साधुः खल्वाटो निर्धनः क्वचित्+।
४४०. क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्।
४४१. क्षते प्रहारा निपतन्त्यभीक्ष्णम्।

---

* नरः।

† पुमान्-इत्यपि पाठः।

‡ भाग्यवान्-इति पाठान्तरम्।

+ दन्तच्छिद्री क्वचिन् मूर्खः क्वचिद् गीतवती सती इत्युत्तरार्धम्।

४४२. क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ।
४४३. क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।
४४४. क्षणे रुष्टः क्षणे तुष्टो रुष्टस्तुष्टः क्षणे क्षणे ।
४४५. क्षारं नीरं च शीतलं भवति ।
४४६. क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति ।
४४७. क्षीरनीरविभेदे तु हंसो हंसो बको बकः ।
४४८. क्षीणा जना निष्करुणा भवन्ति ।
४४९. क्षीणा नरा नष्टगुणा भवन्ति* ।
४५०. क्षीरेण दग्धजिह्वस्तक्रं फूत्कृत्य पामरः ‡ पिबति ।
४५१. क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
४५२. क्षुधि कदशनमपि नितरां भोक्तुः सम्पद्यते स्वादु ।
४५३. क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ।
४५४. क्षुरणोऽपि रोहति तरुः ।
४५५. खण्डिता एव शोभन्ते वीराधरपयोधराः ।
४५६. खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ।
४५७. खल्वाटो निर्धनः क्वचित् ।
४५८. खद्योतो द्योतते तावद् यावन्नोदयते शशी ।
४५९. खातमूलमनिलो नदीरयैः पातयत्यपि मृदुस्तटद्रुमम् ।
४६०. खलः करोति दुर्वृत्तं नूनं फलति साधुषु ।
४६१. गण्डस्योपरि पिटका संवृत्ता ।
४६२. गजानां पङ्कमग्नानां गजा एव धुरन्धराः ।
४६३. गगनलताकुसुममपि शेखरयितुमिच्छसि ।

* सकलं पद्यं वितथम्—

त्यजेत्क्षुधार्ता महिलाऽपि पुत्रं भुङ्क्ते क्षुधार्ता भुजगी स्वमण्डम् । बुभुक्षितः किं न करोति पापं क्षीणा नरा नष्टगुणा भवन्ति ॥ १ ॥

‡ बालकः, इति पाठः ।

४६४. गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते।
४६५. गतानुगतिको लोको न लोकः पारमार्थिकः।
४६६. गच्छ सूकर ! भद्रं ते ब्रूहि सिंहो मया जितः।
४६७. गहना कर्मणो गतिः।
४६८. गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः।
४६९. गद्यं कवीनां निकषं वदन्ति।
४७०. गङ्गातीरमपि त्यजन्ति मलिनं ते राजहंसा वयम्।
४७१. गतं न शोचामि कृतं न मन्ये।
४७२. गतस्य शोचनं नास्ति।
४७३. गर्जन्ति केचिन्मुधा।
४७४. ग्रीष्मो ग्रीष्मेण शाम्यति।
४७५. गुणा गुणेषु वर्तन्ते।
४७६. गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।
४७७. गुणाः प्रियत्वेऽधिकृता न संस्तवः।
४७८. गुणाः खलु गुणा एव न गुणा भूतिहेतवः।
४७९. गुणाः स्थाने पूज्या नरवर ! न तु स्थानविकलाः।
४८०. गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः।
४८१. गुणः खल्वनुरागस्य कारणं न बलात्कारः।
४८२. गुणवत्तरपात्रेण च्छाद्यन्ते गुणिनां गुणाः।
४८३. गुणधर्मविहीनस्य जीवितं निष्प्रयोजनम्।
४८४. गुणवते कन्या प्रतिपादनीया।
४८५. गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः।
४८६. गुणी गुणं वेत्ति न वेत्ति निर्गुणः।
४८७. गुणी च गुणरागी च विरलः सज्जनो जनः।
४८८. गुणैर्विहीना बहु जल्पयन्ति।
४८९. गुणैकपक्षपातिनां [illegible] गुणाः प्रीतिं जनयन्ति।

४९०. गुरुणाऽपि समं हास्यं कर्तव्यं कुटिलं विना ।
४९१. गुरूणां यत्र सन्देहः शिष्याणां कीदृशी मतिः ।
४९२. गुरुवद् गुरुपुत्रे वर्तितव्यम् ।
४९३. गुरौ रुष्टे न कश्चन* ।
४९४. गुडेन वर्धितः श्लेष्मा स्वयं वृद्धया निपात्यते ।
४९५. गृहं हि गृहिणीहीनमरण्यसदृशं मतम् ।
४९६. गृहार्थमारोपितस्य दीपस्य रथ्योपकारकत्वम् ।
४९७. गृहीत्वाऽर्थं गताश्चौराः कस्तानाच्छेत्तुमर्हति ।
४९८. गृहीतं न परित्यजेत् ।
४९९. गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
५००. गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ।
५०१. घनाम्बुनाराजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते ।
५०२. घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
५०३. चन्द्रचन्दनयोर्मध्ये शीतला साधुसङ्गतिः ।
५०४. चन्दनं खलु मया पादुकापरिभोगेण दूषितम् ।
५०५. चञ्चलं हि मनः ।
५०६. चन्द्रादमृतमिति किमत्राश्चर्यम् । चन्द्रः सुधोद्गारीति
५०७. चर्मतन्तौमहिषीं हन्ति ।
५०८. चकास्ति योग्येन हि योग्यसङ्गमः ।
५०९. चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ।
५१०. चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।
५११. चलत्येकेन पादेन तिष्ठत्येकेनबुद्धिमान् ।
५१२. चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
५१३. चिन्ता जरा मनुष्याणाम् ।

---

* रक्षक इति शेषः ।

५१४. चिन्ता समं नास्ति शरीरशोषणम् ।
५१५. चिन्तायां च चितायां च बिन्दुभेदो हि दृश्यते ।
चिता दहति निर्जीवं चिन्तातु सजीवकम् ।
५१६. चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता ।
त्यो ५१७. चूताङ्कुरं विचिन्वत्योरावयोः पिपीलिकाभिर्दष्टम् ।
५१८. चोराणाञ्चन्द्रमा रिपुः ।
५१९. चौरापराधेन माण्डव्य*निग्रहः ।
५२०. चौरे गते वा किमु सावधानम् ।
५२१. छन्दोवत्सूत्राणि भवन्ति ।
५२२. छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ।
५२३. छायेव न त्यजति कर्म फलानुबन्धि ।
५२४. छायेव मैत्री खलसज्जनाम् ।
५२५. छिद्रेष्वनर्था बहुलीभवन्ति ।
५२६. छिन्ने मूले नैव शाखा न पत्रम् ।
५२७. छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो, धीवरो भणति, धर्मो मे भविष्यति ।
५२८. छिन्नपुच्छोऽश्वो गर्दभो न भवति ।
५२९. छिन्द्याद् † बाहुमपिदुष्टात्मनः ।
५३०. छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ।
५३१. जठरं को न बिभर्तिकेवलम् ।
५३२. जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
५३३. जलं जलसम्पृक्तं महाजलाय कल्पते ।

---

* माण्डव्यः कश्चिदृषिरासीत् ।

तं † मारणं पञ्चमो वेदः सुपुत्रः सप्तमो रसः ।
दाती पंचदश रत्नम्—इति पूर्वपादमवमि ।

५३४. जगति जातेष्वजातकुसुमः के नाम ।
५३५. जनानने कः करमर्पयिष्यति ।
५३६. जन्मान्धस्तु दिवाकरः ।
५३७. जन्मिनो मानहीनस्य तृणस्य च समा गतिः ।
५३८. जातस्य हि ध्रुवं मृत्युर्ध्रुवं जन्म मृतस्य च ।
५३९. जातौ न वित्ते न गुणे न कामः सौन्दर्यमत्र प्रवणः स कामः ।
५४०. जातौ जातौ यदुत्कृष्टं तद्रत्नमित्यभिधीयते ।
५४१. जामाता दशमो ग्रहः† ।
५४२. जारोऽपि स्याद् गृहपतिः ।
५४३. जानुमात्रं वरं वारि तृष्णाच्छेदकरं नृणाम् ।
५४४. जामाताऽर्थं श्रथितः सूपोऽतिथ्यादेरप्युपकारकः ।
५४५. जितं सर्वं जिते रसे ।
५४६. जीवत्यर्थदरिद्रोऽपि धीदरिद्रो न जीवति ।
५४७. जीवन् नरो भद्रशतानि पश्यति ।
५४८. जीवो जीवस्य जीवनम् ।
५४९. जीर्णमङ्गे सुभाषितम् ।
५५०. जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
५५१. ज्ञातं पितुश्च पाण्डित्यं दुहुई नाम कीर्तनात् ।
५५२. ज्ञानमज्ञानस्यैव निवर्तकम् ।
५५३. ज्ञानलवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति ।
५५४. ज्ञानादेव तु कैवल्यम् ।
५५५. झटिति पराशयवेदिनो हि विज्ञाः ।
५५६. टीका गुरूणांगुरुः ।
५५७. तत्त्वमसि ।

† धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति-वस्तुपरार्थम् ।

५५८. तत् कार्मुकं कर्मसु यस्य शक्तिः ।
५५९. तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ।
५६०. तदभिन्नाभिन्नस्य तदभिन्नत्वम् ।
५६१. तदिदं मृणालकाण्डेन गण्डशैलताडनम् ।
५६२. तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ।
५६३. तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ।
५६४. तदिदं चूडारत्नं चरणाभरणत्वमुपनीतम् ।
५६५. तक्रं शक्रस्य दुर्लभम् ।
५६६. तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः ।
५६७. तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ।
५६८. तरुः प्रसूते पुष्पाणि मरुद्* वहति सौरभम् ।
५६९. तं यस्तु पश्यन्नपि निह्नवीत तस्मै नमः पण्डितशेखराय ।
५७०. तातस्य कूपोऽयमिति ब्रुवाणाः क्षारं जलं कापुरुषाः वदन्ति ।
५७१. तादृश एव तादृशानामपसर्पः स्यात् ।
५७२. तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ।
५७३. तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ।
५७४. तिष्ठत्येकां निशां चन्द्रः श्रीमान् सम्पूर्णमण्डलः ।
५७५. तुष्यतु दुर्जनः ।
५७६. तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ।
५७७. तुल्ये बले तु बलवान् परिकोपमेति ।
५७८. तुष्टे सति न लाभाय रुष्टे नाशाय नैव† च ।
५७९. तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ।

---

* कञ्चित् पदार्थमित्यर्थः ।

† "[illegible] नाङ्गाराय न भस्मने" इत्युत्तरार्धम् ।

५८०. तृणात् सञ्जायते क्षीरं क्षीरात्सञ्जायते विषम् ।
५८१. तृष्णा वैतरणी नदी ।
५८२. तृष्णैका तरुणायते ।
५८३. तेजसां हि न वयः समीक्ष्यते ।
५८४. तेजसा सह जातानां वयः कुत्रोपयुज्यते ।
५८५. तेजो यस्य विराजते सबलवान् स्थूलेषु कः प्रत्ययः* ।
५८६. त्यजेत् क्षुधार्ता महिलाऽपि पुत्रम् ।
५८७. त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसोऽव्ययम् ।
५८८. त्रिदशैः पूजितो वह्निरयसा सह पीड्यते ।
५८९. त्रिशङ्क दिवान्तराले तिष्ठ ।
५९०. त्रैलोक्य दीपको धर्मः सुपुत्रः कुलदीकः ।
५९१. दन्तभङ्गोऽपि नगानां श्लाघ्यो गिरिविदारणे ।
५९२. दन्ति दन्त समानं हि निस्सृतं महतां वचः ।
५९३. दम्भी भवति विवेकी ।
५९४. दशाननोऽहरत् सीतां बन्धनञ्च महोदधेः ।
५९५. दग्धानां किल वह्निना हितकरः सेकोऽपि तस्योद्भवः ।
५९६. दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ।
५९७. दरिद्रपुरुषसङ्क्रान्तमनाः खलु गणिका लोकेऽवचनीयाभवति ।
५९८. दरिद्रः कन्थालाभं वरं मन्यते ।
५९९. दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय ।
६००. दर्दुरा यत्र वक्तारस्तत्र मौनं हि शोभनम् ।
६०१. दीर्घसूत्री विनश्यति ।
६०२. दुःखं दुःखै स्तिरोधीयते ।

---

* विश्वास इत्यर्थः । योयः स्थूलः स सबलवानेवेति निश्चेतुं न शक्यते इति-भावः ॥

६०३. दुःखपरिहारेण सुखमाप्नामिति ।
६०४. दुःखिते मनसि सर्वमसह्यम् ।
६०५. दुर्जनः प्रकृतिं याति सेव्यमानोऽपि नित्यशः ।
६०६. दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम् ।
६०७. दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ।
६०८. दुर्जनगम्या नार्यः ।
६०९. दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम्* ।
६१०. दुर्भगाभरणप्रायो† ज्ञानं भारः क्रियां विना ।
६११. दुर्लभः स गुरुर्लोके शिष्यचिन्तापहारकः ।
६१२. दुर्लभं भारते जन्म मानुष्यं तत्र दुर्लभम् ।
६१३. दुरवगाहा गतिर्दैवस्य ।
६१४. दुरतिक्रमा दुहितरो विपदः ।
६१५. दुस्त्यजः खलु सुखादभिमानः ।
६१६. दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ।
६१७. दुग्धार्णवादृते जन्म चन्द्रकौस्तुभयोः कुतः ।
६१८. दुरासदश्च तत्तेजः क्षत्रं यद् ब्रह्मसंयुतम् ।
६१९. दुष्करं विषमौषधीकर्तुम् ।
६२०. दुष्टे दुष्टं समाचरेत् ।
६२१. दूरतो भूधरा रम्याः ।
६२२. दूरस्थाः पर्वता रम्याः ।
६२३. दूरतः पर्वता रम्याः ।
६२४. दूरस्थोऽपि न दूरस्थो यो यस्य मनसि स्थितः‡ ।
६२५. देवदत्तस्य पुत्रः देवदत्तायाः पुत्र इति ।

---

* मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं स्मृतम्-इत्युत्तरार्धम् ।

† वन्ध्यापोषय पुत्रस्य इत्यर्थः ।

‡ यो यस्य हृदये नास्ति समीपस्थोऽपिदूरतः । इत्युत्तरार्धम् ।

६२६. देवो दुर्बलघातकः ।
६२७. देवा गिरिजलधिवर्षी च ।
६२८. देशाचारो बलीयान् ।
६२९. दैवमविद्वांसः प्रमाणयन्ति ।
६३०. दैवं फलति सर्वत्र न च विद्या न च पौरुषम्
६३१. दैवानुकूल्ये किमपि विघ्नाय न भवति ।
६३२. दैवी सम्पद् विमोक्षाय निबन्धायासुरी मता।
६३३. दैवी विचित्रा गतिः ।
६३४. दैवे दुर्जनतां* गते तृणमपि प्रायेण वज्रायते ।
६३५. दैव्याः शक्तेः पुरो न बलवती मानवीशक्तिः ।
६३६. दोषग्राही गुणत्यागी पल्लोलीव† हि दुर्जनः ।
६३७. दोषत्रयोपशमनाय नमो गुडाय ।
६३८. दोषोऽपि गुणतां याति प्रभोर्भवति चेत्कृपा ।
६३९. दोषा गुणा, गुणा दोषाः ।
६४०. दोषा दोषा गुणा गुणाः‡ ।
६४१. द्रवति च हिमरश्मावुद्गते चन्द्रकान्ता ।
६४२. द्रव्येण सर्वे वशाः ।
६४३. द्विर्बद्धं सुबद्धं भवति ।
६४४. द्विकर्णस्य च मन्त्रस्य ब्रह्माऽप्यन्तं न गच्छति ।
६४५. धर्मस्य त्वरिता गतिः ।
६४६. धर्म एको हि निश्चलः ।
६४७. धर्मस्य तत्त्वं निहितं गुहायां देवा न जानन्ति कुतो मनुष्याः ।

---

* दुर्बलताम्-इति पाठान्तरम् ।

† चालनी, छाननी ।

‡ एक 'वरक' रूपस्य स्थाने त्रिविधा गुणाः ।

६४८. धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ।
६४९. धर्मिकल्पनातो धर्मकल्पना वरीयसी ।
६५०. धर्मेण हीनाः पशुभिः समानाः ।
६५१. धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ।
६५२. धर्मो मित्रं मृतस्य च ।
६५३. धनक्षये दीप्यति जाठराग्निः ।
६५४. धनहीनः स्वपत्न्याऽपि त्यज्यते किं पुनः परैः ।
६५५. धनाद्धर्मं ततः सुखम् ।
६५६. धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति ।
६५७. धनेन बलवान् लोको धनाद् भवति पण्डितः ।
६५८. धाता यथापूर्वमकल्पयत् ।
६५९. धिग् बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
६६०. ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ।
६६१. धीरास्तरन्ति विपदं न तु दीनचित्ताः ।
६६२. धूसरादपि कला चान्द्री किं न बध्नाति लोचनम् ।
६६३. न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ।
६६४. न हि सर्वपरित्यागमन्तरेण सुखी भवेत् ।
६६५. न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रयन्ते । श्री
६६६. न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवेत् ।
६६७. न हि भवति यन्न भाव्यम् ।
६६८. न हि तरक्षुर्मृगराजस्य परिपन्थी ।
६६९. न हि चूडामणिः पादे प्रभवामीति बध्यते ।
६७०. न हि कस्तूरिकामोदः शपथेन निवार्यते ।
६७१. न हि सर्वे भवादृशाः ।
६७२. न हि तापयितुं शक्यं सागराम्भ स्तृणोल्कया ।

६७३. न हि तद्ध्वनिः स्वर्णे यादृक् कांस्येऽजायते ।
६७४. न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ।
६७५. न हि सर्वः सर्वं जानाति ।
६७६. न हि सर्वविदस्तु सर्वे ।
६७७. न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।
६७८. न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ।
६७९. न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः ।
६८०. न हि सिंहो गजास्कन्दी भयाद् गिरिगुहाशयः ।
६८१. न हि चलति नराणां भाविनी कर्मरेखा ।
६८२. न हि दृष्टेऽनुपपन्नम् ।
६८३. न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते किन्तु विधेयं स्तोतुम् ।
६८४. न हि सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारुह्य नृत्यति ।
६८५. न हि भवति तरक्षुः प्रतिपक्षो हरिणशावकस्य ।
६८६. न हि करकङ्कणदर्शनायाऽऽदर्शापेक्षा ।
६८७. न हि त्रिपुत्रो द्विपुत्र इति कथ्यते ।
६८८. न हि कठोरकण्ठीरवस्य कुरङ्गशावकः प्रतिभटो भवति ।
६८९. न हि पवित्रं स्याद् गोक्षीरं श्वदृतौ धृतम् ।
६९०. न हि प्रतिज्ञामात्रेणाऽर्थसिद्धिः ।
६९१. न हि खादिरगोचरे परशौ पलाशेद्वैधीभावो भवति ।
६९२. न हि भिक्षुको भिक्षुकं याचितुमर्हति सत्यस्मिन्नभिक्षुके ।
६९३. न हि सर्वत्रानीशशक्तिः ।
६९४. न हि नभःकुसुमस्य सौरभासौरभविचारो युक्तः ।

६९५. न हि कर्मणि कर्मारम्भः।

६९६. न हि श्यामाकबीजं परिकर्मसहस्रेणापि कलमाषांकुराय कल्पते।

६९७. न हि जातु वटाङ्कुरः कुटजबीजाज्जायते।

६९८. न हि सहस्रेणाप्यन्धैः पाटच्चरेभ्यो गृहं रक्ष्यते*।

६९९. न हि सुशिक्षितोऽपि बटुःस्वस्कन्धमारोढुं पटुः।

७००. न हि सुशिक्षितोऽपि विज्ञानी स्वेन स्कन्धेनात्मानं वोढुमुत्सहते।

७०१ न हि सुतीक्ष्णाप्यसिधारा स्वयं छेत्तुमाहितव्यापारा।

७०२. न हि विवाहानन्तरं वरपरीक्षा क्रियते

७०३. न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मसु।

७०४. न हि पुराकृतानि पुरुषैः पौरुषाणि शक्यन्ते निवारयितुम्।

७०५. न हि नहि रक्षति डुकृञ्करणे।

७०६. न हीङ्गितज्ञोऽवसरेऽवसीदति।

७०७. नह्यजाते पुत्रे नामधेयकरणम्।

७०८. नह्यश्वस्थाने गां पश्यन्नश्वोऽयमित्यमूढोऽध्यवस्यति।

७०९. न भवति बिसतन्तुर्वारणं वारणानाम्†।

७१०. न गर्दभो गायति शिक्षितोऽपि संदर्शितं पश्यति नार्कमन्धः।

७११. न दुःखं पञ्चभिः सह।

७१२. न च कुल्यं परित्याज्यमेष धर्मः सनातनः।

७१३. न च मृगाः सन्तीति यवा नोप्यन्ते।

७१४, न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे।

* चौरेभ्यः॥

† हस्तिनाम्।

७१५. न खलु स उपरतो यस्य* वल्लभो जनः स्मरति ।
७१६. न खलु शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति ।
७१७. नग्न क्षपणके देशे रजकः किं करिष्यति ।
७१८. न चलति खलु वाक्यं सज्जनानां कदाचित् ।
७१९. न देवचरितं चरेत् ।
७२०. न तृष्णायाः परो व्याधिः ।
७२१. न च धर्मो दयापरः ।
७२२. न तत्सत्यं यच्छलेनाभ्युपेतम् ।
७२३. न वारिणा शुध्यति चान्तरात्मा ।
७२४. न लिङ्गं धर्मकारणम् ।
७२५. न श्वेतभावमुज्झति शङ्खः शिखिभुक्तमुक्तोऽपि ।
७२६. न दत्त्वा परिकीर्तयेत् ।
७२७. न नश्यति तमो नाम कृतया दीपवार्तया ।
७२८. नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ।
७२९. न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति । मारुतस्य
७३०. नष्टे मूले नैव पत्रं न पुष्पम् ।
७३१. न भवति पुनरुक्तं भाषितं सज्जनानाम् ।
७३२. न जाने संसारः किममृतमयः किं विषमयः ।
७३३. न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः ।
७३४. नवे तस्मिन् मही पाले सर्वं नवमिवाभवत् ।
७३५. न भूतो न भविष्यति ।
७३६. न दृष्टं न च द्रक्ष्यते ।
७३७. न व्यापारशतेनापि शुकवत् पाठ्यते बकः ।
७३८. नराणां नापितो धूर्तः ।
७३९. न सा सभा यत्र न सन्ति वृद्धाः ।

---

* अधीगर्थदयेशां कर्मणीति षष्ठी ।

७४०. न सुवर्णे ध्वनिस्तादृग् यादृक् कांस्ये प्रवर्तते।
७४१. न कुर्यान्निष्फलं कर्म।
७४२. न जातु कामः कामानामुपभोगेन शाम्यति।
७४३. न प्रेम नव्यं सहतेऽन्तरायम्
७४४. नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति।
७४५. न बन्धुमध्ये धनहीनजीवितम्।
७४६. न शालेः स्तम्बकारिता वप्तुर्गुणमपेक्षते।
७४७. न सुखसुप्तः प्रतिबोधयितव्यः।
७४८. न खल्वखिलमपि निघर्ष्यते सुवर्णखण्डं वर्णनिष्कर्षाय।
७४९. न खलु बधिराणां कुतूहलमातनोति कोकिलालापः।
७५०. न खलु कुटजबीजाद् वटाङ्कुरो जायते।
७५१. न खलु क्षुधितोऽपि शार्दूलः कदाचिदपि शाद्वलमत्ति।
७५२. न मोघसङ्कल्पधराः किलामराः।
७५३. न धर्मवृद्धेषु वयः समीक्ष्यते।
७५४. न च निषेधनीया गरीयसां गिरः।
७५५. न सर्वः सर्वं कार्यमेव करोत्यसारे संसारे।
७५६. नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः।
७५७. न ह्यनन्तराया उत्सवाः।
७५८. न ह्यप्राप्य प्रदीपः प्रकाश्यं प्रकाशयति।
७५९. ननु वञ्चनस्य वञ्चनैव प्रतिक्रिया।
७६०. न किञ्चिन्न ददाति भगवान् प्रसन्नः।
७६१. न प्रभातरलं ज्योतिरुदेति वसुधातलात्।
७६२. न घटस्य कूपपतने रज्जुस्तत्र प्रक्षेप्तव्या।
७६३. न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम्।

७६४. न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
७६५. न संशयमनारुह्य नरोभद्राणि पश्यति ।
७६६. न शोभते प्रणयिजने निरपेक्षता ।
७६७. न कमलाकरं वर्जयित्वा राजहंसस्यान्यस्मिन्नभिरमते ।
७६८. न गणस्याग्रतो गच्छेत् सिद्धे कार्ये समं फलम् ।
७६९. न युक्तं परकलत्रदर्शनम् ।
७७०. ननु प्रवातेऽपि निष्कम्पा गिरयः ।
७७१. न चन्द्रादातपो भवति ।
७७२. न मालतीदाम विमर्दयोग्यम् ।
७७३. न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्तयितुम् ।
७७४. न गजदन्तः पुनरेति कूपम् ।
७७५. न पुष्पमोषमर्हत्युद्यानलता ।
७७६. न कालमपेक्षते स्नेहः ।
७७७. न विना चन्द्रं शेफालिकाया विकसान्ति पुष्पाणि ।
७७८. न सर्वदा सर्वस्य सदृशो दशापाकः ।
७७९. न विना हिमानीमचण्डो मार्तण्डः ।
७८०. न खलु सोपानपङ्क्तिमन्तरेण वलभ्याः समारोहः ।
७८१. नवचूतांकुरस्वादकुशलः कोकिलः किल ।
७८२. नष्टाश्वदग्धरथवत्* सह संप्रयोगः ।
७८३. नाकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलान् ।
७८४. नाग्निस्तृप्यति काष्ठानाम् ।
७८५. नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ।
७८६. नादाक्षिण्यं दानमामन्ति ।
७८७. नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ।
७८८. नायं हन्ति न हन्यते ।

---

* तद्यथा—तवाश्वो नष्टो ममापि रथो दग्धः उभौ संप्रयुज्यावहा इति महाभाष्ये ।

७८९. नानम्यं नमेत दारु ।

७९०. नाश्मनि स्यात् क्षुरक्रिया ।

७९१. नामैकदेशे नामग्रहणम् ।

७९२. नान्यः पन्थाविद्यतेऽयनाय

७९३. नान्य दृष्टं स्मरत्यन्यः ।

७९४. नान्यस्य गन्धमपि मानभृतः सहन्ते ।

७९५. नारिकेल* समाकारा दृश्यन्ते हि सज्जनाः ।

७९६. नारीप्रत्यक्षराक्षसी ।

७९७. नाऽद्रव्ये निहिता किंचित् क्रिया फलवती भवेत् ।

७९८. नानृतात् पातकं किञ्चिन्न सत्यात्सुकृतं परम ।

७९९. नास्ति क्रोधसमोरिपुः ।

८००. नास्ति क्षुधासमं दुःखम् ।

८०१. नास्ति रोगः क्षुधासमः ।

८०२. नास्ति विद्यासमं चक्षुः ।

८०३. नास्ति सत्यसमं तपः ।

८०४. नास्ति रागसमं दुःखम् ।

८०५. नास्ति त्यागसमं सुखम् ।

८०६. नास्ति क्रोधसमो वह्निः ।

८०७. नास्ति कामसमो व्याधिः ।

८०८. नास्ति साङ्ख्यसमं ज्ञानम् ।

८०९. नास्ति योगसमं बलम् ।

८१०. नास्तिको वेदनिन्दकः ।

८११. नास्त्यगतिर्मनोरथानाम् ।

८१२. निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी ।

८१३. निरङ्कुशाः कवयः† ।

---

* नारिकेर इत्यपि पाठः ।

† कविवाचः इति पान्तरम् ।

८१४. निस्सारस्य पदार्थस्य प्रायेणाडम्बरो महान् ।
८१५. निमित्तमात्रं भव सव्यसाचिन्* ।
८१६. निरस्तपादपे देशे एरण्डोऽपि द्रुमायते† ।
८१७. निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ।
८१८. निर्वाणदीपे किमु तैलदानम् ।
८१९. निर्विषेणापि सर्पेण कर्तव्या महती फटा ।
८२०. नित्यः शब्दार्थसम्बन्धः ।
८२१. निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ।
८२२. निवृत्तरागस्य गृहं तपो वनम् ।
८२३. निसर्गनिपुणाः स्त्रियः ।
८२४. निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ।
८२५. नीचः श्लाघ्यपदं प्राप्य स्वामिनं लोप्तुमिच्छति ।
८२६. नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ।
८२७. नीवीं प्रति प्रणिहिते तु करे प्रियेण, सख्यः शपामि यदि किञ्चिदपि स्मरामि ।
८२८. नीवी ( बन्ध ) मोक्षो हि मोक्षः ।
८२९. नीरक्षीरविभेद तु हंसो हंसो बको बकः ।
८३०. नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः ।
८३१. नृपतिजनपदानां दुर्लभः कार्यकर्ता ।
८३२. नो‡ खल्वन्धाः सहस्रमपि पान्थाः पन्थानं विदन्ति ।
८३३. नोपभोक्तुं न च त्यक्तुं शक्नोति विषयान् जरी ।
८३४. नोदके शकटं याति न च नौर्गच्छति स्थले ।
८३५. नैराश्यं परमं सुखम् ।
८३६. नैमित्तकानुसारेण निमित्तानि कल्प्यन्ते ।

---

* हे अर्जुन ।

† द्रुम इवाचरतीत्यर्थः ।

‡ नो—इति प्रतिषेधार्थकमव्ययम् ।

८३७. नैवान्यथा भवति यल्लिखितं विधात्रा।
८३८. नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति।
८३९. पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम्।
८४०. पर्जन्यवल्लक्षणप्रवृत्तिः।
८४१. पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः।
८४२. परसदननिविष्टः को लघुत्वं न याति।
८४३. परस्परविरोधे न प्रकारान्तरस्थितिः।
८४४. परस्मिंश्चिन्त्यते यत्तु स्वस्मिन्नेव पतेत्तु तत्।
८४५. परिवर्तिनि संसारे मृतः को वा न जायते।
८४६. परेङ्गितज्ञानफला हि बुद्धयः।
८४७. परैरुपकृताः सन्तः सद्यः प्रत्युपकुर्वते।
८४८. परोपकारोपकरणं शरीरम्।
८४९. परोपदेशवेलायां सर्वे शिष्टा भवन्ति वै।
८५०. परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्।
८५१. परोऽपि हितवान् बन्धुः।
८५२. परोपकाराय सतां विभूतयः
८५३. परोपकारः पुण्याय पापाय परपीडनम्।
८५४. पतितोऽपि राहुवदने तरणिर्बोधयति पद्मखण्डानि।
८५५. पत्तने सति ग्रामे रत्नपरीक्षा।
८५६. पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम्।
८५७. पदं हि सर्वत्र गुणैर्निधीयते।
८५८. पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेन।
८५९. पयःपानं भुजङ्गानां केवलं विषवर्धनम्।
८६०. पयोगते किमु सेतुबन्धः।
८६१. पयोऽपि शौण्डिनीहस्ते वारुणीत्यभिधीयते।

८६२. पलायमानस्य चौरस्य कन्थैव लाभः ।

८६३. पथि शूद्रवदाचरेत् ।

८६४. पलाल*मिव धान्यार्थी त्यजेद् ग्रन्थमशेषतः ।

८६५. पलितेष्वपिदृष्टेषु पुंसः का नाम कामिता ।

८६६. पथ्ये सति गदार्तस्य किमौषधनिषेवणम् ।

८६७. पथ्येऽसति गदार्तस्य किमौषधनिषेवणम् ।

८६८. परिपूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ।

८६९. पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ।

८७०. पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ।

८७१. पठितव्यं तदपि मर्तव्यं दन्तकटाकटेति किं कर्तव्यम् ।

८७२. पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम् ।

८७३. पतनान्ताः समुच्छ्रयाः ।

८७४. पञ्चभिर्मिलितैः किं यज्जगतीह न साध्यते ।

८७५. पण्डकं† मुद्वाह्य मुग्धायाः पुत्रप्रार्थनम् ।

८७६. पण्डिताः समदर्शिनः ।

८७७. पण्डिता एव जानन्ति सिंहसूकरयोर्बलम् ।

८७८. पाणौ पयसा दग्धे तक्रं फूत्कृत्य‡ बालकः§ पिबति ।

८७९. पाठक्रमादर्थक्रमो बलीयान् ।

८८०. पावको लोहसङ्गेन मुद्गरैरभिहन्यते ।

८८१. पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ।

८८२. पाठमात्रमधीता च पङ्के गौरिव सीदति ।

---

* पलालोऽस्त्री स निष्फलः ( धान्यरहितकाण्ड इत्यर्थः ।

† नपुंसकमित्यर्थः ।

‡ फूत्कारं कृत्वेत्यर्थः ।

§ पामरः इत्यपि पाठः ।

८८३. पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः ।

८८४. पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ।

८८५. पिकः कूजति पञ्चमम् ।

८८६. पिण्डे पिण्डे मतिर्भिन्ना ।

८८७. पिण्डं त्यक्त्वा करं लेढि ।

८८८. पित्तेन दूने* रसने सिताऽपि तिक्तायते ।

८८९. पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन† ।

८९०. पिठरः‡ ज्वलदतिमात्रं निजपार्श्वानेव दहतितराम् ।

८९१. पिष्टस्य पेषणं नास्ति ।

८९२. पितुर्दशगुणं माता गौरवेणातिरिच्यते ।

८९३. पिशाचः पिशाचभाषयैव बोधनीयः ।

८९४. पिशाचानां पिशाचभाषयैवोत्तरं देयम् ।

८९५. पीत्वा कर्दमपानीयं भेको रटरटायते ।

८९६. पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ।

८९७. पुस्तकी भवति पण्डितः ।

८९८. पुण्यैर्यशो लभ्यते ।

८९९. पुत्रः शत्रुरपण्डितः ।

९००. पुत्रलिप्सया देवं भजन्त्या भर्ताऽपि नष्टः ।

९०१. पुष्पमाला प्रसङ्गेन सूत्रं शिरसि धार्यते ।

---

* दूने दूषिते, सिता शर्करा ( "मिश्री" इति ) तिक्तायते तिक्तेवाचरति, कर्तुः क्यङ्सलोपश्चेति क्यङ्, निम्बतुल्या सा भवतीत्यर्थः ।

† "अथ कुलकं पटोलस्तिक्तकः पटुः" इत्यमरः परवर ( कड़वी ) इति भाषायाम् ।

‡ पिठरः स्थाल्युखा कुण्डमित्यमरः ( ओदनादिपचन पात्रम् येकनी—बलटोई—पतीली—सगली—इति भाषायाम् ॥

९०२. पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ।
९०३. पुत्रोत्सवे माद्यति का न हर्षात् ।
९०४. पुत्रादपि भयं यत्र तत्र सौख्यं हि कीदृशम् ।
९०५. पुत्तलिकां भङ्क्त्वेदानीं रोदिषि ।
९०६. पुनस्तत्रैवावलम्बितो वेतालः ।
९०७. पूर्णे मनसि सम्पूर्णं जगत्सर्वं सुधाद्रवैः ।
९०८. प्रतिक्षणं यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।
९०९. प्रतिवातं न हि घनः कदाचिदुपसर्पति ।
९१०. प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमात् ।
९११. प्रसक्तं हि प्रतिषिध्यते ।
९१२. प्रसन्नाकारेषु सर्वोऽपि स्निह्यति ।
९१३. प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ।
९१४. प्रज्वालितानि शष्पाणि नाङ्गाराय न भस्मने ।
९१५. प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
९१६. प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदाञ्चयः ।
९१७. प्रत्यक्षे किम्प्रमाणम्* ।
९१८. प्रथमे ग्रासे मक्षिकापातः ।
९१९. प्रणि†पातप्रतिकारः संरम्भो हि महात्मनाम् ।
९२०. प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ।
९२१. प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ।
९२२. प्रवाहपतितं कार्यं कुर्वन्नपि न लिप्यते ।
९२३ प्रसादचिह्नानि पुरः फलानि ।
९२४. प्रतिपत् पाठनाशिनी ।
९२५. प्रबलपङ्क इव सर्वमधस्तान्नयति दारुणो दासशब्दः ।
९२६. प्रभाते दीपको रविः ।

---

* किमनुमानमिति पाठान्तरम् ।

† प्रणिपातः प्रणतिः ।

६२७. प्रभवति हि भगवान् विधिः ।

६२८. प्रयोजनं विना मन्दोऽपि न प्रवर्तते ।

६२९. प्रकर्षतन्त्रा हि रणे जयश्रीः ।

६३०. प्रभवति मण्डयितुं वधूरनङ्गः ।

६३१. प्रच्छन्नमप्यूह्यते हि चेष्टा* ।

६३२. प्रकृतिर्दुस्त्यजा ।

६३३. प्रकृतिमुखरा हि ब्राह्मणजातिः ।

६३४. प्रभुप्रसादो हि तनोति पौरुषम् ।

६३५. प्रभुत्वं धनमूलं हि ।

६३६. प्रथमं सहकारमञ्जर्यो उद्भिद्यन्ते पश्चात्तच्चुम्बिनी† कलकण्ठी कण्ठमुद्रां शिथिली करोति ।

६३७. प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ।

६३८. प्रदीपे प्रदीपं प्रज्वाल्य तमोनाशाय प्रयतते ।

६३९. प्रसिद्धमुद्दिश्याप्रसिद्धं हि विधीयते ।

६४०. प्रमेयसिद्धिः प्रमाणाद्धि ।

६४१. प्रत्ययलोपे प्रत्ययलक्षणम् ।

६४२. प्राधान्येन व्यपदेशा भवन्ति ।

६४३. प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनी भवन्ति ।

६४४. प्रायः सज्जनसङ्गतोऽपि लभते दैवानुरूपं फलम् ।

६४५. प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ।

६४६. प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ।

६४७. प्रायेण भूमिपतयः प्रमदा लताश्च यत्पार्श्वतो भवन्ति तत्परिवेष्टयन्ति ।

६४८. प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ।

* हिताहित प्राप्ति परिहारार्था क्रिया चेष्टा ।

† सहकारोऽतिसुगन्धाम्रद्रुमः । कलकण्ठी कोकिला ।

९४९. प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां* भाजनम् ।
९५०. प्राप्तिपूर्वको हि प्रतिषेधः ।
९५१. प्राप्तौ सत्यां निषेधः ।
९५२. प्रासादशिखरस्थोऽपि काकः किं गरुडायते ।
९५३. प्राकृतानि तेजांस्यप्राकृते ज्योतिषि शाम्यन्ति ।
९५४. प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ।
९५५. प्रारब्धमुत्तमगुणा न परित्यजन्ति ।
९५६. प्रियवक्ता भवति धूर्तजनः ।
९५७. प्रियेषु सौभाग्यफला हि चारुता ।
९५८. प्रियानाशे कृत्स्नं जगदिद मरण्यं हि भवति ।
९५९. प्रोक्तं श्रद्धाविहीनस्य ह्यरण्यरुदितोपमम् ।
९६०. फलवत्सन्निधावफलं तदङ्गम् ।
९६१. फलश्रुतिरपि रोचनार्था ।
९६२. फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ।
९६३. फलं भाग्यानुसारतः ।
९६४. फलं तरतमभावापन्नम् ।
९६५. फलेन फलमादिशेत् ।
९६६. फटा ( णा ) टोपो भयङ्करः ।
९६७. बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।
९६८. बलवानपि निस्तेजाः कस्यानभिभवास्पदम् ।
९६९. बहुभाषिणो न श्रद्दधाति लोकः ।
९७०. बहुप्रकाराश्च संसारवृत्तयः ।
९७१. बहुरत्ना वसुन्धरा ।
९७२. बहूनामल्पसाराणां समवायो दुरत्ययः ।
९७३. बलवति सति दैवे बन्धुभिः किं विधेयम् ।
९७४. बलं मूर्खस्य मौनित्वम् ।

* "तत्रैव यान्त्यापदः" इत्यपि पाठः क्वचित् ।

९७५. बली बलं वेत्ति न वेत्ति दुर्बलः ।
९७६. बलीयसी केवलमीश्वरेच्छा ।
९७७. बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ।
९७८. बद्धो वाससि ग्रन्थिः ।
९७९. बन्धुः को नाम दुष्टानाम् ।
९८०. बन्धुरप्यहितः परः ।
९८१. बन्धनस्थितो गृहकपोतको बिडालिकालोके पतितः ।
९८२. बाबावाक्यं प्रमाणम् ।
९८३. बालानां रोदनं बलम् ।
९८४. बालानामध्ययनं तपः ।
९८५. बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।
९८६. बालः पयसा दग्धो दध्यपि फूत्कृत्य पिबति ।
९८७. बादरायण* सम्बन्धाद् यूयं यूयं वयं वयम् ।
९८८. बुद्धिनाशात् प्रणश्यति ।
९८९. बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
९९०. बुभुक्षितः किं द्विकरेण भुङ्क्ते ।
९९१. बुभुक्षितः किं न करोति पापम् ।
९९२. बुभुक्षितं† न प्रतिभाति किञ्चित् ।
९९३. बुभुक्षितै र्व्याकरणं न भुज्यते ।
९९४. बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ।
९९५. बोद्धारो मत्सरग्रस्ताः ।
९९६. ब्रह्मविद् ब्रह्मैव भवति ।
९९७. ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नाऽपरः ।
९९८. ब्रह्मवाक्यं जनार्दनः ।

---

* अस्माकं बदरीचक्रं बदरी च तवाङ्गणे—इति पूर्वार्धम् ।

† "अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि" इति प्रतियोगे द्वितीया ।

९९९. ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
१०००. ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय ।
१००१. ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगि-
ताम् ।
१००२. भङ्गेनापि मृणालानामनुबध्नन्ति तन्तवः ।
१००३. भवति योजयितुर्वचनीयता ।
१००४. भवितव्यं भवत्येव कर्मणामीदृशी गतिः ।
१००५. भवितव्यानां द्वाराणि भवन्ति सर्वत्र ।
१००६. भवितव्यता खलु बलवती ।
१००७. भक्ष्यमाणो निरुदयः सुमेरुरपि हीयते ।
१००८. भक्षितेऽपि लशुने न शान्तो व्याधिः ।
१००९. भये सीमा मृत्युः ।
१०१०. भवति न भवति ।
१०११. भक्तिरेव गरीयसी ।
१०१२. भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।
१०१३. भावप्रधानमाख्यातम् ।
१०१४. भावे हि विद्यते देवस्तस्माद् भावो हि कारणम् ।
१०१५. भार्याहीनं गृहस्थस्य शून्यमेव गृहं मतम् ।
१०१६. भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
१०१७. भिन्नाश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ।
१०१८. भिन्नरुचि र्हि लोकः ।
१०१९. भिक्षुको भिक्षुकं दृष्ट्वा श्वानवद्* गुर्गुरायते ।
१०२०. भिक्षुः कौपीनलाभं बहु मन्यते ।
१०२१. भुजे वीर्यं निवसति न वाचि ।
१०२२. भुङ्क्ते क्षुधार्ता भुजगी स्वमण्डम् ।

* श्वैव श्वानः ( स्वार्थिकोऽण् ) "कुक्कुटस्तु शुनिः श्वानः कपिलो मण्डलः शुनः" इति वाचस्पतिः ।

१०२३. भूयस्त्वात्तद्वाद्स्तद्वादः ।
१०२४. भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्व मेति ।
१०२५. भोगस्य भाजनं राजा मन्त्री कार्यस्य भाजनम् ।
१०२६. भोजनान्ते विषं वारि ।
१०२७. भोगो भूषयते धनम् ।
१०२८. भोग्यं किं रमणीं विना ।
१०२९. भ्रष्टस्य* का वा गतिः ।
१०३० भ्रष्टावसरस्य खेदकारणं गमनम् ।
१०३१. मन्त्रस्य रक्षणं कार्यसिद्ध लक्षणम् ।
१०३२. मन्त्रब्राह्मणयो र्वेदनामधेयम् ।
१०३३. मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ।
१०३४. मन्दोऽप्यविरतोद्योगः सदा विजयभाग् भवेत् ।
१०३५. मणिना भूषितः सर्पः किमसौ न भयङ्करः ।
१०३६. मलयेऽपि स्थितो वेणु र्वेणुरेव न संशयः ।
१०३७. मदोपशमनं शास्त्रं खलानां कुरुत मदम् ।
१०३८. मदः किल स्त्रीजनस्य सविशेषमण्डनम् ।
१०३९. मशकदशनमध्य दन्तिनः संचरन्ति ।
१०४०. मत्तो जातं न तु मया कृतम् ।
१०४१. महाजनो येन गतः स पन्थाः ।
१०४२ महानप्यल्पतां याति निर्गुणे गुणविस्तरः† ।

---

* "नष्टस्य काऽन्या गतिः" इत्येवंविधोऽपि पाठः ।

भिक्षो मांसनिषेवणं किमुचितं किं तेन मद्यं विना,
मद्यञ्चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।
वारस्त्रीरतये कुतस्तव धनं द्यूतेन चौर्येण वा,
चौर्यद्यूतपरिग्रहोऽपि भवतो भ्रष्टस्य का वा गतिः इति सकलं पद्यम् ।

† आधाराधेयभावेन गजेन्द्र इवदर्पणे–इत्युत्तरार्धम् ।

१०४३ महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ।
१०४४. मम मुखे जिह्वा नास्ति ।
१०४५. मक्षिकास्थाने मक्षिकापातः ।
१०४६. मक्षिकापादघातेन कम्पितं भुवनत्रयम् ।
१०४७. मरणाद् वरं व्याधिः ।
१०४८. मरणान्तानि वैराणि ।
१०४९. मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः ।
१०५०. मनः पूतं समाचरेत् ।
१०५१. मनः कृतं कृतं सर्वं न शरीरकृतं कृतम्* ।
१०५२. मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ।
१०५३. मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
१०५४. मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ।
१०५५. मनस्यन्यद् वचस्यन्यत् कार्यमन्यद् दुरात्मनाम् ।
१०५६. मनस्विनो दरिद्रस्य वनादन्यत् कुतः सुखम् ।
१०५७ †मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ।
१०५८. मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः ।
१०५९. मधुराऽपि मूर्च्छयते विषविटपि समाश्रिता वल्ली ।
१०६०. महिषी प्रसवोन्मुखये महिषो मदनातुरः ।
१०६१. महानुभ‡वां संसर्गः कस्य नोन्नतिकारकः ।
१०६२. महान्तः कृपणान् पातुं यान्ति तद्गृहमादरात् ।
१०६३. महान्तः एव महतामर्थं साधयितुं क्षमाः ।
१०६४. महान् महत्स्वेव करोति विक्रमम् ।
१०६५. महीयांसः प्रकृत्या मितभाषिणः
१०६६. मतिरेव बलाद् गरीयसी ।

* येनैवालिङ्गिता भार्या तेनैवालिङ्गिता सुता इत्यवशिष्टम् ।

† अत्यन्तविमुखे दैवे व्यर्थयत्ने च पौरुषे—इति पूर्वभागः ।

‡ महाजनस्य—इति पाठान्तरम् ॥

१०६७. मानाधीना मेयसिद्धिः ।
१०६८. मानो हि महतां धनम् ।
१०६९. मातर्लक्ष्मि तव प्रसादवशतो दोषा अपि स्युर्गुणाः ।
१०७०. मायाविनी खल्वियं राक्षसजातिः ।
१०७१. मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।
१०७२. माघे* सन्ति त्रयोगुणाः ।
१०७३. मातृजङ्घा हि वत्सस्य स्तम्भीभवति बन्धने ।
१०७४. मातुलुङ्ग†बीजकामुकेन शाखामृगेण स्फुलिङ्गो‡ लब्धः ।
१०७५. माने म्लाने कुतः सुखम् ।
१०७६. मान्या एव मान्यानां मानं कुर्वन्ति नेतरे ।
१०७७. मारणाय गृहीतोऽङ्गच्छेदं स्वीकरोति ।
१०७८. मिथिलायां प्रदीप्तायां न मे दह्यति किञ्चन ।
१०७९. मुण्डित मुण्डो नक्षत्राणि पृच्छति ।
१०८०. मुण्डं मुण्डयित्वा नक्षत्राणि पृच्छति ।
१०८१. मुक्तो द्वादशभिर्वर्षैः§ श्वपुच्छः प्रकृतिं गतः ।
१०८२. मुरारेस्तृतीयः पन्थाः ।
१०८३. मुदे न हृद्या किमु बालकेलिः ।
१०८४. +मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं स्मृतम् ।

---

* उपमा कालिदासस्य भारवेरर्थगौरवम् । दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः इति समग्रम् ॥

† मातुलुङ्गो दाडिमः ( अनार )

‡ स्फुलिङ्गोऽग्निकणः

§ स्वेदितो मर्दितश्चैव रज्जुभिः परिवेष्टितः । इति पूर्वांशम् ॥

\+ प्रथमं दुर्जनं वन्दे सज्जनं तदनन्तरम्—इति पूर्वांशः ॥

१०८५. मुखमस्तीति वक्तव्यं शतहस्ता* हरीतकी ।
१०८६. मूलं नास्ति कुतः शाखा ।
१०८७. मूले कुठारः ।
१०८८. मूलाभावे कुतः शाखा ।
१०८९. मूले छिन्ने कुतः पादपस्य लग्नम् ।
१०९०. मूर्खस्य नास्त्यौषधम् ।
१०९१. मूर्खः सुखं जीवति ।
१०९२. मृतस्य मरणं न हि ।
१०९३. मेयेन मानावगतिस्तु युक्ता ।
१०९४. मौनं सर्वार्थसाधनम् † ।
१०९५. म्लानाऽपि मोच्या न हि केसरस्रक् ।

इति द्वितीयः समुल्लासः ।

---

# तृतीयः समुल्लासः

१०९६. यतः सत्यं ततो धर्मः ।
१०९७. यतो धर्म स्ततो धनम् ।
१०९८. यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ।
१०९९. यत् पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ।
११००. यत्तदोर्नित्यसम्बन्धः ।
११०१. यत्परः‡ शब्दः स शब्दार्थः ।

---

* दशहस्ता—इतिपठान्तरम् ।

† साधकमिति यावत् ।

‡ यदर्थे यस्य शब्दस्य तात्पर्यं स शब्दार्थः ।
यत्तात्पर्यकतया शब्दः प्रयुज्यते स शब्दार्थः । इति वाऽर्थः ॥

११०२. यत् पठितं तद् गुरवे समर्पितम् ।
११०३. यत् कृतकं तदनित्यम् ।
११०४. यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ।
११०५. यत्र वैदिकास्तत्र पण्डिताः,
यत्र पण्डिता स्तत्र वैदिकः ।
यत्र नोभयं तत्र चोभयं,
यत्र चोभयं तत्र नोभयम् ।
११०६. यत्राविद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
११०७. यत्रास्ति लक्ष्मीर्विनयो न तत्र ।
११०८. यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ।
११०९. यद् भावि तद् भवति नाऽत्र विचारहेतुः ।
१११०. यद् ददाति यदश्नाति तदेव धनिनो धनम् ।
११११. यद्वा* तद्वा भविष्यति ।
१११२. यद्विवाहस्तद्गीतगानम् ।
१११३. यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
१११४. यद् देवेन ललाटपत्रलिखितं तत् प्रोज्झितुं कः क्षमः ।
१११५. यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः ।
१११६. यद्यपि शुद्धं लोकविरुद्धम्,
नाकरणीयं नाचरणीयम् ।
१११७. यद् येन विना नोत्पद्यते तत्तेनाक्षिप्यते ।
१११८. यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
१११९. यदश्वेन हृतं पुरा तत्पश्चाद् गर्दभः प्राप्तुं केनोपायेन शक्नुयात् ।

* यस्य कस्य तरोमूलं येनकेनापि मिश्रितम् ।
यस्मै कस्मै प्रदातव्यम्—इति पूर्वपादत्रयम् ॥

११२०. यदस्मदीयं न हि तत् परेषाम् ।
११२१. यदि दैवात् फलं नास्ति छाया केन निवार्यते ।
११२२. यद्बुद्धिरति भ्रमरस्तदन्येषां करोति कार्यम् ।
११२३. यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ।
११२४. यच्छीलः स्वामी तच्छीलास्तस्य प्रकृतयः ।
११२५. यल्लब्धं तल्लब्धम् ।
११२६. यल्लब्धं तदेव वरतरम् ।
११२७. यन्नवे भाजने लग्नः संस्कारो नाऽन्यथा भवेत् ।
११२८. यथा देशस्तथा भाषा ।
११२९. यथा बीजं तथांकुरः ।
११३०. यथा भूमिस्तथा तोयम् ।
११३१. यथा राजा तथा प्रजा ।
११३२. यथा नाम तथा गुणः ।
११३३. यथा वृक्षस्तथाफलम् ।
११३४. यथायक्षस्तथा बलिः ।
११३५. यथा वाचस्तथा क्रियाः ।
११३६. यथा मुखं तथा चपेटिका ।
११३७. यथाप्रश्नस्तथोत्तरम् ।
११३८. यथा हि कुरुते राजा प्रजा तमनुवर्तते
११३९. यथाऽन्नं* भक्षयेन्नित्यं जायते तादृशी प्रजा ।
११४०. यस्यार्थास्तस्य मित्राणि,
११४१. यस्यार्थास्तस्य बान्धवाः ।
११४२. यस्यार्थाः स पुमाँल्लोके ।
११४३. यस्यार्थाः स च पण्डितः ।
११४४. यस्याऽज्ञानं भ्रमस्तस्य ।
११४५. यस्य दुर्गं स भूपतिः ।

---

* यदन्नमिति वा । प्रजाः स्यात्सन्ततौ जने ।

११४६. यस्य बुद्धिर्बलं तस्य ।
११४७. यस्य देशस्य यो जन्मी तज्जं तस्यौषधं हितम् ।
११४८. यस्य किञ्चिन्न दातव्यं तस्य देयं किमुत्तरम् ।
११४९. यस्य कार्यं न कर्तव्यं तस्य देयं किमुत्तरम्* ।
११५०. यस्यैते तस्य तद्धनम् ।
११५१. यस्यावसरो भ्रष्टः सोऽपि भ्रष्टः ।
११५२. यस्यास्ति धनं स किं क्रोडे कृत्वा दर्शयति ।
११५३. यशः पुण्यैरवाप्यते ।
११५४. यशोधनानां हि यशो गरीयः ।
११५५. यशो हि रक्ष्यं परतो यशोधनैः ।
११५६. यक्षानुरूपो बलिः ।
११५७. यः कर्ता स भोक्ता ।
११५८. यः† कारयति स करोत्येव ।
११५९. यः कुरुते स भुङ्क्ते ।
११६०. यात्यधोऽधो व्रजत्युच्चैर्नरः स्वैरेवकर्मभिः ।
११६१. या यस्य प्रकृतिः स्वभावजनिता केनाऽपि न त्यज्यते ।
११६२. या गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी ।
११६३. या लोकद्वयसाधिनी तनुभृतां सा चातुरी चातुरी ।
११६४. या रागशशिशोभना गतघना सा यामिनी यामिनी ।
११६५. या सौन्दर्यगुणान्विता पतिरता सा कामिनी कामिनी ।
११६६. यादृग् दृश्यते तादृक् कल्प्यते ।
११६७. यादृशो यक्षस्तादृशो बलिः ।
११६८. यादृशश्चित्रकारस्तादृशी चित्रकर्मरूपरेखा ।

---

* "अद्य सायं पुनः प्रातः सायं प्रातः पुनः पुनः" इति उत्तरार्धम् ॥

† जीवस्तावत् पिबति–ईश्वरः पाययति,
पाययन्नपि पिबतीत्युच्यते ।

११६९. यादृशः कविस्तादृशी काव्यबन्धच्छाया ।
११७०. यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
११७१ यादृशं मुखं तादृशी चपेटा ।
११७२. यादृशास्तन्तवः कामं तादृशो जायते पटः ।
११७३. यादृशां तादृशी गतिः ।
११७४. यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।
११७५. यादृशी शीतला* देवी तादृशः खरवाहनः ।
११७६. यावत्स्नाता तावत्पुण्यम् ।
११७७. यावत्तैलं व्याख्यानम् † ।
११७८. यावच्छिरस्तावती शिरोव्यथा ।
११७९. यावज्जीवं सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत् ।
११८०. याचको याचकं दृष्ट्वा श्वानवद् गुर्गुरायते ।
११८१. याचते कार्यकाले यः स किं भृत्यः स किं सुहृत् ।
११८२. याचनान्तं हि गौरवम् ।
११८३. याच्ञा मोघा वर मधिगुणे नाधमे लब्धकामा ।
११८४. यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
११८५. याति यन्तुः प्रमादेन गजोव्यालत्ववाच्यताम् ।
११८६. युद्धस्य वार्ता रम्या ।
११८७. ये मन्त्ररक्षणपरास्ते सर्पनराधिपे उपचरन्ति ।
११८८. येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ।
११८९. ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ।
११९०. ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
११९१. योगाद् रूढिर्बलीयसी ।
११९२. योगविभागादिष्टसिद्धिः ।
११९३. योग्यो योग्येन सम्बध्यते ।

---

* "कालिका" इति पा०, ।

† तावद् व्याख्यानम्--इत्यपि पाठः ।

११९४. यो यस्य हृदये नास्ति समीपस्थोऽपिदूरतः।
११९५. यो न सम्भावयेद् भृत्यान् कार्यकाले स किम्प्रभुः।
११९६. यो वस्तु पश्यन्नपि निह्नवीत तस्मै नमः पण्डितशेखराय।
११९७. यो हि भुक्तवन्तं ब्रूयाद् मा भुक्था इति किं तेन कृतं स्यात्।
११९८. रक्षन्ति पुण्यानि पुराकृतानि।
११९९. रक्षति खलु भव्यं भवितव्यता।
१२००. रत्नदीपस्य हि शिखा वात्ययाऽपि न नाश्यते*।
१२०१. रत्नाकरादृते कुतश्चन्द्रलेखायाः प्रसूतिः।
१२०२. रत्नं समागच्छतु काञ्चनेन।
१२०३. रत्नेषु लुप्तेषु बहुष्वमर्त्यै† रद्यापि रत्नाकर एव सिन्धुः।
१२०४. रम्याणां विकृतिरपि श्रियं तनोति।
१२०५. रथ्याम्बु जाह्नवीसङ्गात् त्रिदशैरपि वन्द्यते।
१२०६. रमते न मरालस्य मानसं मानसं विना।
१२०७. रविरपि न तादृग् यादृक् संदहति वालुकानिकरः।
१२०८. रवेरविषयं किं न प्रदीपस्य प्रकाशनम्।
१२०९. राजानं कामिनं चौरं प्रविशन्ति प्रजागराः।
१२१० राजा प्रकृतिरञ्जनात्।
१२११. राजा मित्रं केन दृष्टं श्रुतं वा।
१२१२. रात्रिर्गमिष्यति भविष्यति सुप्रभातम्।
१२१३. रामो द्विर्नभाषते।
१२१४. रिक्तपाणिर्न पश्येद्धि राजानं देवतां गुरुम्।
१२१५. रिक्तहस्ते नोपेयाद् राजानं देवतां गुरुम्।

* नश्यति—इत्यपि पाठः।

† देवैः।

१२१६. रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ।
१२१७. रूढिर्योगमपहरति ।
१२१८. रूढिर्योगाद् बलीयसी ।
१२१९. लङ्घ्यते न खलु कालनियोगः ।
१२२०. लङ्केश्वरो हरति दाशरथेः कलत्रं,
प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ॥
१२२१. लतायां पूर्वलूनायां *प्रसूनस्यागमः कुतः ।
१२२२. लक्ष्मीपतिस्तु निर्धनः ।
१२२३. लक्ष्यानुसारेण हि लक्षणव्यवस्था न तु वैपरीत्येन ।
१२२४. लक्ष्ये लक्षणं सकृदेव प्रवर्तते ।
१२२५. लाभाल्लाभः प्रवर्तते ।
१२२६. लालने बहवो दोषास्ताडने बहवो गुणाः ।
१२२७. लिखितमिह ललाटे प्रोज्झितुं कः समर्थः ।
१२२८. लुब्धमर्थेन गृह्णीयात् ।
१२२९. लोकयात्राऽनुवर्तनीया ।
१२३०. लोचनाभ्यां विहीनस्य दर्पणः‡ ( णं ) किं करिष्यति ।
१२३१. लोभमूलानि पापानि ।
१२३२. लोभः पापस्य कारणम् ।
१२३३. लोभेन बुद्धिश्चलति ।
१२३४. लोभो जनयते तृषाम् ।
१२३५. लोके कोऽभ्युत्थितः पतति कोऽपि पतितोऽभ्युत्तिष्ठते ।

---

* प्रसवस्योद्भवः कुत इति पाठान्तरम् ।
प्रसूनं पुष्पफलयोरित्यमरः ।

‡ "आदर्शो दर्पणः प्रोक्तः" इत्यमरमाला ।
किन्तद् दर्पणमस्ति यत्र सकलम्--इतिधर्मसेनः, अतः क्लीबमपि--इति मुकुटः ॥

१२३६. वरं सांशयिकान्निष्कात् असांशयिकः कार्षापणः† ।
१२३७. वरं तत्कालोपगता तित्तिरी न तु दिवसान्तारिता मयूरी ।
१२३८. वरं विरोधोऽपि समं महात्मभिः ।
१२३९. वरं हि मानिनो मृत्युर्न दैन्यं स्वजनाग्रतः ।
१२४०. वरं विभवहीनेन प्राणैः सन्तर्पितोऽनलः ।
१२४१. वरं मृत्युर्न पुनरपमानः ।
१२४२ वरं शून्या शाला न च खलु वरो दुष्टवृषभः,
१२४३. वरं वेश्या पत्नी न पुनरविनीता कुलवधूः ।
१२४४. वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे,
१२४५. वरं प्राणत्यागो न पुनरधमानामुपगमः ।
१२४६. वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् ।
१२४७. वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिः ।
१२४८. वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ।
१२४९. वरं मौनं कार्यं न च वचनमुक्तं यदनृतम् ।
१२५०. वरघाताय कन्यावरणम् ।
१२५१. वरमद्य कपोतः श्वोमयूरात् ।
१२५२. वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ।
१२५३ वर्तमानेन वर्तेत यद् गतं गतमेव तत् ।
१२५४. वर्धनं चाथ संमानं खलानां प्रीतये कुतः ।
१२५५. वचने का दरिद्रता ।
१२५६. वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् ।
१२५७. वचो भूषा सत्यम् ।
१२५८. वक्तुं सुकरं कर्तुं पुनर्दुष्करम् ।
१२५९. वचो दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम् ।

* दीनारेऽपि निष्कोऽस्त्री (मोहर—अशर्फी) ।

† कार्षापणः कार्षिकः स्यात् (रुपया—चवन्नी—वा, पैसा) ।

१२६०. वक्तुं सुकरमिदं दुष्करमध्यवासितुम् ।
१२६१. वक्तुरेव हि तज्जाड्यं यत्र श्रोता न बुध्यते ।
१२६२. वक्ता श्रोता च यत्रास्ते रमन्ते तत्र सम्पदः ।
१२६३. वक्तारो दर्दुरा यत्र तत्र मौनं हि शोभते ।
१२६४. वनानि दहतो वह्नेः सखा भवति मारुतः ।
१२६५. वनेऽपि दोषाः प्रभवन्ति रागिणाम् ।
१२६६. वनेऽपि सिंहा मृगमांसभक्ष्या बुभुक्षिता नैव तृणं चरन्ति ।
१२६७. वज्रं वज्रेण शाम्यति ।
१२६८. वयोरूपविभूतीनामेकैकं मदकारणम् ।
१२६९. वयोगते किं वनिताविलासः ।
१२७०. वह्निरेव वह्नेर्भेषजम् ।
१२७१. वसन्ति प्रेम्णि गुणा न वस्तुनि ।
१२७२. वादी भद्रं न पश्यति
१२७३. वाग्भूषणं भूषणम्
१२७४. वागका वाग्मिनः सतः ।
१२७५. वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।
१२७६. वाणोच्छिष्टं जगत्सर्वम् ।
१२७७. वामे विधौ न हि फलन्त्यभिवाञ्छितानि ।
१२७८. वासः प्रधानं खलु योग्यतायाः ।
१२७९. वासोविहीनं विजहाति लक्ष्मीः ।
१२८०. वाराङ्गनेव नृपनीतिरनेकरूपा ।
१२८१. विकसति हि पतङ्गस्योदये* पुण्डरीकम् ।
१२८२. विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ।
१२८३. विक्रीते करिणि किमङ्कुशे विवादः ।

---

* पतङ्गस्य-सूर्यस्य । द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः—इत्युत्तरार्धम् ।

१२८४. विचित्रा वेधसः सृष्टिः ।
१२८५. विचित्राणि विधिविलसितानि ।
१२८६. विचित्ररूपाः खलु चित्तवृत्तयः ।
१२८७. विद्याया बुद्धिरुत्तमा ।
१२८८. विद्या ददाति विनयम् ।
१२८९. विद्या कामदुघा धेनुः ।
१२९०. विद्या गुरूणां गुरुः ।
१२९१. विद्या सर्वस्य भूषणम् ।
१२९२. विद्याधनं सर्वधनप्रधानम् ।
१२९३. विद्यावतां भागवते परीक्षा ।
१२९४. विद्याविहीनः पशुः ।
१२९५. विद्या स्तब्धस्य निष्फला ।
१२९६. विद्याधरो यथा मूर्खः ।
१२९७. विद्वान् कुलीनो न करोति गर्वम् ।
१२९८. विद्वान् सर्वत्र पूज्यते ।
१२९९. विद्वानेव जानाति विद्वज्जनपरिश्रमम् ।
१३००. विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन ।
१३०१. विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ।
१३०२. विशेषणाभावे विशिष्टाभावः ।
१३०३. विधिरहो बलवानिति मे मतिः ।
१३०४. विधेर्विचित्राणि विचेष्टितानि ।
१३०५. विषं शङ्करभूषणम् ।
१३०६. विषं भुङ्क्ष्व मा चास्य गृहे भुङ्क्थाः† ।

---

✻ न हि वन्ध्या विजानाति गुर्वीम्प्रसववेदनाम्—इत्युत्तरभागः ।

† एतद्गृहे न भोक्तव्यमित्यत्र तात्पर्यमिति स एव वाक्यार्थः । विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा माऽस्य गृहे भुङ्क्थाः, इत्युपात्तशब्दार्थे एव तात्पर्यम् ।

१३०७. विषधरवदनाद् विषमन्तरेण किमन्यन्निष्क्रामति ।
१३०८. विषमां हि दशां प्राप्य दैवं गर्हयते नरः ।
१३०९. विषाद्दते विषधरस्य मुखात्किमन्यन्निस्सरति ।
१३१०. विषस्य विषमौषधम् ।
१३११. विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया ।
१३१२. विषकुम्भं पयोमुखम् ।
१३१३. विषवृक्षोऽपि* संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्† ।
१३१४. विना मलयमन्यत्र चन्दनं न प्ररोहति ।
१३१५. विनायकं प्रकुर्वाणो रचयामास वानरम् ।
१३१६. विनाशकाले विपरीतबुद्धिः ।
१३१७. विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ।
१३१८. विवेकाच्च परो बन्धुः ।
१३१९. विवेकभ्रष्टानां भवति विनिपातः शतमुखः ।
१३२०. विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ।
१३२१. विपुलकदलीफललिप्सया जिह्वाच्छेदनम् ।
१३२२. विरलो वा परदुःखदुःखितो जनः ।
१३२३. विश्वासप्रतिपन्नानां वञ्चने का विदग्धता ।
१३२४. विश्वासयत्याशु सतां हि योगः ।
१३२५. विप्रतिषेधे परं कार्यम् ।
१३२६. वीरभोग्या वसुन्धरा ।
१४२७. वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
१३२८. वृद्धस्य तरुणी भार्या प्राणेभ्योऽपि गरीयसी ।
१३२९. वृद्धबुद्धिरनागतं पश्यति ।

---

* क्वचिन्निपातेनाभिधानमिति प्रथमा ।

† न युज्यते इत्यर्थः ।

१३३०. वृद्धस्य तरुणी विषम्।

१३३१. वृद्धो जनो दुःखशतानि भुङ्क्ते।

१३३२. वृद्धा वेश्या तपस्विनी।

१३३३. वृद्धा नारी पतिव्रता।

१३३४. वृद्धिमिष्टवतो मूलमपि* नष्टम्।

१३३५. वृक्षः प्रचलन् सहावयवैः प्रचलति।

१३३६. वृश्चिकभिया पलायमानेनाशीविषमुखे† निपतितः।

१३३७. वैशेष्यात्तु तद्वादः।

१३३८. व्याघ्रस्य चोपवासेन‡ पारणं पशुमारणम्।

१३३९. व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिः।

१३४०. व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्।

१३४१. व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः।

१३४२. व्याख्यानतो× विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्।

१३४३. व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।

१३४४. व्रजति कालवशाद् बलवानपि।

१३४५. व्रतभ्रंशे सुखाप्राप्तिः।

१३४६. व्रणं शिशमयिषोः शस्त्रग्रहणम्।

---

* मूलं विनष्टमित्यपिपाठः।

† सर्पमुखे।

‡ "उपवासस्य" इति पाठान्तरे व्याघ्रकर्तृकोपवाससम्बन्धिपारणमिति शाब्द बोधः।

× विशेषस्यान्यतरार्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निर्णयो हि यतः सन्देहाल्लक्षणमलक्षणमननुष्ठापकं लक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः।

इति परिभाषेन्दुशेखरे सुस्पष्टम्।

१३४७. शब्दमात्रान्न भेतव्यमज्ञात्वा शब्दकारणम् ।
१३४८. शब्दहेतुं परित्यज्य कुट्टिनी गौरवं गता ।
१३४९. शरद्घनं नार्दति चातकोऽपि ।
१३५०. शर्वरीदीपकश्चन्द्रः प्रभाते दीपको रविः ।
१३५१. शरीरमाद्यं खलु धर्मसाधनम् ।
१३५२. शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ।
१३५३. शनैः पन्थाः शनैः कन्था शनैः पर्वतलङ्घनम् ।
१३५४. शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ।
१३५५. शश्वदुपभोगेऽपि गिरिरपि नश्यति ।
१३५६. शकुनय आशुगामित्वात् पुरस्तादुत्पतिताः पश्चाद् दृश्यन्ते ।
१३५७. शलभीनिपाते कदाचिद् दीपोऽपि विनाशमधिगच्छति
१३५८. शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
१३५९. शते पञ्चाशत् ।
१३६०. शतमप्यन्धानां न पश्यति ।
१३६१. शतं दद्यान्न विवदेदिति विज्ञस्य सम्मतम् ।
१३६२. शलाटुः सुमधुरः पाके तस्य कुतोऽम्लता ।
१३६३. शब्दाधिक्यादर्थाधिक्यम् ।
१३६४. शशिनो व्यपदेशेन वसन्ति शशकाः सुखम् ।
१३६५. शान्तितुल्यं तपो नास्ति न सन्तोषात् परं सुखम् ।
१३६६. शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ।
१३६७. शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ।
१३६८. शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान् पुरुषः स विद्वान् ।
१३६९. शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते ।
१३७०. शिरसि लाञ्छितं लङ्घयति कः ।
१३७१. शिरसि [illegible] ।

१३७२. शिरश्छेदेऽपि शतं न ददाति विंशतिपञ्चकं तु प्रयच्छति।

१३७३. शिला तरति पानीयं गीतं गायति वानरः।

१३७४. शिवं नासिकया विना शेषस्य शरीरस्य।

१३७५. शिवास्ते पन्थानः सन्तु।

१३७६. शिष्यप्रकर्षो यशसे गुरूणाम्।

१३७७. शिष्यापराधे गुरोर्दण्डः।

१३७८. शीलयन्ति मुनयः सुशीलताम्।

१३७९. शीलं परं भूषणम्।

१३८०. शीलं हि विदुषां धनम्।

१३८१. शीलं हि सर्वस्य नरस्य भूषणम्।

१३८२. शीर्षे सर्पो देशान्तरे वैद्यः।

१३८३. शुष्केन्धने वह्निरुपैति वृद्धिम्।

१३८४. शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना।

१३८५. शुद्धा हि बुद्धिः किल कामधेनुः।

१३८६. शेते करी मशकपादविपादिकायाम्।

१३८७. शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः।

१३८८. शोको हि नाम पर्यायः पिशाचस्य।

१३८९. श्यालको गृहनाशाय।

१३९०. श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्।

१३९१. श्रीकृष्णस्य कृपालवो यदि भवेत् कः कं निहन्तुं क्षमः।

१३९२. श्रुताश्रुतयोः श्रुतसम्बन्धो बलीयान्।

१३९३. श्रुतेरिवाऽर्थं स्मृतिरन्वगच्छत्।

१३९४. श्रुतवन्तोऽपि रजोनिमीलिताः।

१३९५. श्रेयस्तैलञ्च पिण्याकात्*।

१३९६. श्रेयसि केन तृप्यते।

---

* तिलकल्के च पिण्याकः ( तिलों का चूरा )

१३९७. श्रेयांसि बहुविघ्नानि ।
१३९८. श्वशुरगृहनिवासः स्वर्गतुल्यो नराणाम् ।
१३९९. श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति नाऽश्वो न गर्दभ इति ।
१४००. श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ।
१४०१. षट्कर्णो भिद्यते मन्त्रः ।
१४०२. सम्पूर्णकुम्भो न करोति शब्दम् ।
१४०३. सङ्गः सतां किमु न मङ्गलमातनोति ।
१४०४. सङ्गः सर्वात्मना हेयः ।
१४०५. सङ्गतं दर्शनात् सताम् ।
१४०६. सम्मीलने नयनयोर्न हि किञ्चिदस्ति ।
१४०७. सन्तोषतुल्यं धनमस्ति नान्यत् ।
१४०८. सन्तोष एव पुरुषस्य परं निधानम् ।
१४०९. सन्तोषी ब्राह्मणः शुचिः ।
१४१०. सम्प्राप्ते षोडशे वर्षे गर्दभी चाप्सरायते ।
१४११. सम्पत्तौ च विपत्तौ च महतामेकरूपता ।
१४१२. संसर्गतो* दोषगुणा भवन्ति ।
१४१३. सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे ।
१४१४. संवृणोति खलु दोषमज्ञता ।
१४१५. संशयनिश्चययोर्मध्ये संशयस्यैव प्राधान्यम् ।
१४१६. सन्निहितादपि व्यवहितं बलीयः ।
१४१७. सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ।
१४१८. सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ।
१४१९. सर्वं खल्विदं ब्रह्म ।
१४२०. सर्वं त्यक्त्वा हरिं भजेत् ।
१४२१. सर्वं शून्यं दरिद्रस्य ।

---

* संसर्गजा इति पाठान्तरम् ।

१४२२. सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते।
१४२३. सर्वं सत्ये प्रतिष्ठितम्।
१४२४. सर्वं तु शेषमश्नीयाद् विना तु घृतपायसम्।
१४२५. सर्वं वै महतां महत्।
१४२६. सर्वं वाक्यं सावधारणम्।
१४२७. सर्वं कार्यं सकारणम।
१४२८. सर्वं ज्ञानं धर्मिण्यभ्रान्तम्।
१४२९. सर्वं शीलवता जितम्।
१४३०. सर्वं वै मूर्खमण्डलम्।
१४३१. सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्।
१४३२. सर्वं विष्णुमयं जगत्।
१४३३. सर्वं रत्नमुपद्रवेण सहितं निर्दोषमेकं यशः।
१४३४. सर्वङ्कषा भगवती भवितव्यतैव।
१४३५. सर्वङ्कषः कषति हा विषमः कृतान्तः।
१४३६. सर्वस्य द्वे सुमतिकुमती सम्पदापत्तिहेतू*।
१४३७. सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः।
१४३८. सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्।
१४३९. सर्वस्याऽपि विनाशकालसमये ह्यर्धं त्यजेत् पण्डितः।
१४४०. सर्वविधिभ्यो लोपविधिर्बलवान्।
१४४१. सर्वविशेषणं सावधारणम्।
१४४२. सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः।
१४४३. सर्वनाशो हि दुस्तरः (दुस्सहः)
१४४४. सर्वमतिमात्रं दोषाय।
१४४५. सर्वमुत्पादि भङ्गुरम्।
१४४६. सर्वशून्या दरिद्रता।

---

* एको गोत्रे प्रभवति पुमान् यः कुटुम्बं बिभर्ति वृद्धो यूना सह परिचयात् त्यज्यते कामिनीभिः, स्त्री पुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम्।

१४४७. सर्वमौदरिकस्याऽभ्यवहार्यमेव विषयः।
१४४८. सर्वमप्यौदरिकस्याऽभ्यवहार एव पर्यवस्यति।
१४४९. सर्वत्र नह्यस्ति द्वैतसिद्धिः।
१४५०. सर्वरसा अनुप्रासाः पानीयम्।
१४५१. सर्वतो बलवती ह्यन्यथानुपपत्तिः।
१४५२. सर्वतो जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्।
१४५३. सर्वत्रार्जवं शोभते।
१४५४. सर्वस्य वल्लभो जामाता भवति।
१४५५. सर्वस्याभ्यागतो गुरुः।
१४५६. सर्वदेवमयोऽतिथिः।
१४५७. सर्वसिद्धा त्रयोदशी।
१४५८. सर्वशाखाप्रत्ययमेकं कर्म।
१४५९. सर्वः स्वार्थं समीहते।
१४६०. सर्वः कान्तमात्मीयं* पश्यति।
१४६१. सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम्।
१४६२. सर्वः कालवशेन नश्यति नरः को† वा परित्रायते
१४६३. सर्वः सगन्धेषु विश्वसिति।
१४६४. सर्वः प्रायो भजति विकृतिं भिद्यमाने प्रतापे।
१४६५. सर्वाङ्गे दुर्जनो विषम्।
१४६६. सर्वारम्भास्तण्डुलप्रस्थमूलाः‡।
१४६७. सर्वा एवापदस्तस्य यस्य तुष्टं न मानसम्।
१४६८. सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम्।
१४६९. सर्वारम्भा हि दोषेण धूमेनाग्निरिवाऽऽवृताः।

---

* आत्मानम्—इत्यपि पाठः पठ्यते कुत्रचित् पुस्तके।

† कः कम्—इत्यपि पाठः।

‡ तण्डुलानां प्रस्थं मूलं येषामिति विग्रहः।

१४७०. सर्वे पदा हस्तिपदे निमग्नाः।
१४७१. सर्वे गुणाः काञ्चनमाश्रयन्ते।
१४७२. सर्वे ग्रहाः शान्तिकरा भवन्ति।
१४७३. सर्वे विषयश्छन्दांसि विकल्प्यन्ते।
१४७४. सर्वेषामेव रोगाणां कारणं कुपिता मलाः।
१४७५. सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते।
१४७६. सर्वे भावाः क्षणपरिणामिन ऋते चिच्छक्तेः।
१४७७. सर्वोऽपि नववरो लज्जातुरो भवति।
१४७८. सर्वो गुणेषु रज्यते न शरीरेषु।
१४७९. सतां सङ्गो हि भेषजम्।
१४८०. सतां माने म्लाने मरणमथवा दूरगमनम्।
१४८१. सतां सद्भिः सङ्गः कथमपि पुण्येन भवति।
१४८२. सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।
१४८३. सतां हि प्रियंवदता कुलविद्या।
१४८४. सतां हि वाणी गुणमेव भाषते।
१४८५. सतां हि सङ्गः सकलं प्रसूते।
१४८६. सदा लोकहिते युक्ता रत्नदीपा इवोत्तमाः।
१४८७. सदाऽभिमानैकधना हि मानिनः।
१४८८. सद्य एव सुकृतां हि पच्यते कल्पवृक्षफलधर्मि काङ्क्षितम्।
१४८९. सद्बीजान्यपि क्षेत्राणि* दुष्येयुः क्षेत्रदोषतः।
१४९०. सत्यं ज्ञानमनन्तं ब्रह्म।
१४९१. सत्यं कण्ठस्य भूषणम्।
१४९२. सत्यं न तद् यच्छलमभ्युपैति।

---

* सस्यानीति पाठान्तरम्।

१५३९. सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ।

१५४०. सुखं हि दुःखान्यनुभूय शोभते ।

१५४१. सुखार्थी चेत्त्यजेद् विद्यां विद्यार्थी चेत्त्यजेत्सुखम् ।

१५४२. सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ।

१५४३. सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।

१५४४. सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ।

१५४५. सुदेवे च सुपात्रे च हुतं दत्तं न नश्यति ।

१५४६. सुपुत्रः कुलदीपकः ।

१५४७. सुलोचना जीर्णपटाऽपि शोभते न नेत्रहीना कनकैरलङ्कृता ।

१५४८. सुखं ब्रह्म जगद् दुःखमिति वेदान्तडिण्डिमः ।

१५४९. सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।

१५५०. सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ।

१५५१. सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ।

१५५२. सेवाश्ववृत्तिराख्याता ।

१५५३. सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।

१५५४. सेवा सदा शङ्किनी ।

१५५५. सेवाभीरवो हि सन्तः ।

१५५६. सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।

१५५७. सैषा महतो वंशस्तम्बाल्लट्वा*नुकृष्यते ।

१५५८. सोत्साहस्य हि लोकेऽस्मिन्न किञ्चिदपि ×दुर्लभम् ।

१५५९. सोऽयं पाशदर्शनभयपलायितस्य फणिनि पदन्यासः ।

१५६०. सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः ।

---

* लट्वा करञ्जभेदे च फलेऽवद्ये खगान्तरे—इति मेदिनी ।

× दुष्करमिति पा० ।

१५१४. सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
१५१५. सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।
१५१६. समभागताः सपदि वैरमापदः ।
१५१७. सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः ।
१५१८. सर्पो दशति काले तु दुर्जनस्तु पदे पदे ।
१५१९. सर्वे नष्टे सर्वं घृष्टिर्न याति ।
१५२०. सतीव योषित् प्रकृतिः सुनिश्चला पुमांसमभ्येति भवान्तरेष्वपि ।
१५२१. स सुखी यस्तृष्णया मुच्यते ।
१५२२. सलज्जा गणिका नष्टा ।
१५२३. सत्त्वात्प्रकृतौ विकारलयः ।
१५२४. साप्तपदीनं सख्यम् ।
१५२५. सागरमुज्झित्वा कुत्र वा महानद्यवतरति ।
१५२६. सामान्ये नपुंसकम् ।
१५२७. साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ।
१५२८. सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ।
१५२९. सानुकूले जगन्नाथे विप्रियः सुप्रियो भवेत् ।
१५३०. साम्प्रतिकाभावे भूतपूर्वगतिः ।
१५३१. सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ।
१५३२. सामान्यविधिरस्पष्टः ।
१५३३. सिध्यन्ति कुत्र सुकृतानि विना श्रमेण ।
१५३४. सिद्धिर्भवति कर्मजा ।
१५३५. सुरक्षितं दैवहतं विनश्यति ।
१५३६. सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ।
१५३७. सुखं प्रतीक्षितविभावनमेव वाचः ।
१५३८. सुतप्तमपि पानीयं शमयत्येव पावकम् ।

१५३९. सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ।

१५४०. सुखं हि दुःखान्यनुभूय शोभते ।

१५४१. सुखार्थी चेत्त्यजेद् विद्यां विद्यार्थी चेत्त्यजेत्सुखम् ।

१५४२. सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम् ।

१५४३. सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।

१५४४. सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ।

१५४५. सुक्षेत्रे च सुपात्रे च ह्युप्तं दत्तं न नश्यति ।

१५४६. सुपुत्रः कुलदीपकः ।

१५४७. सुलोचना जीर्णपटाऽपि शोभते न नेत्रहीना कनकैरलङ्कृता ।

१५४८. सुखं ब्रह्म जगद् दुःखमिति वेदान्तडिण्डिमः ।

१५४९. सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।

१५५०. सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ।

१५५१. सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ।

१५५२. सेवा श्ववृत्तिराख्याता ।

१५५३. सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।

१५५४. सेवा सदा शङ्किनी ।

१५५५. सेवाभीरवो हि सन्तः ।

१५५६. सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।

१५५७. सैषा महतो वंशस्तम्बाल्लट्वा*नुकृष्यते ।

१५५८. सोत्साहस्य हि लोकेऽस्मिन्न किञ्चिदपि ×दुर्लभम् ।

१५५९. सोऽयं पाशदर्शनभयपलायितस्य फणिनि पदन्यासः ।

१५६०. सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः ।

---

* लट्वा करञ्जभेदे च फलेऽवद्ये खगान्तरे—इति मेदिनी ।

× दुष्करमिति पा० ।

१५६१. स्कन्धेनापि वहेच्छत्रून् कार्यमासाद्य बुद्धिमान् ।
१५६२. स्खलनं हि मनुष्यधर्मः ।
१५६३. स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ।
१५६४. स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ।
१५६५. स्तोत्रं कस्य न तुष्टये ।
१५६६. स्तब्धस्य* नश्यति यशः ।
१५६७. स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नरा नखाः ।
१५६८. स्थानं प्रधानं न बलं प्रधानम् ।
१५६९. स्थान स्थितः कापुरुषोऽपि शूरः ।
१५७०. स्थाने क्रोधो न खलु दोषाय ।
१५७१. स्थलतो हि करालम्बः सुशिष्टैरेव दीयते ।
१५६२. स्थूलकायः प्रशस्यते ।
१५७३. स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत् क्वचित् ।
१५७४. स्पृशन्नपि गजो हन्ति ।
१५७५. स्फाटिकं भाजनं भग्नं †काकिन्याऽपि न गृह्यते ।
१५७६. स्वयमसिद्धः कथं परान् साधयितुं समर्थः ।
१५७७. स्वयमेव वर्धिता लता कथं नु फलसमये लूना ।
१५७८. स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ।
१५७९. स्वयमपि लिखितं स्वयं न वाचयति ।
१५८०. स्वयं नष्टः परानपि नाशयति ।
१५८१. स्वभावो दुरतिक्रमः ।
१५८२. स्वजातिर्दुरतिक्रमा ।
१५८३. स्वके गेहे कुकुरोऽपि तावच्चण्डो भवति ।

---

* गर्वितस्येत्यर्थः ।

† काकिण्या—इत्यपि पाठः, काकिनी (णी) पण का चौथा अंश दमड़ी ॥